षट्सन्दर्भे

# तत्त्वसन्दर्भः

[ व्याख्याद्वयोपेतः ]



प्रकाशनस्थानम्—

अच्युतग्रन्थमाला-कार्यालयः,

काशी

षट्सन्दर्भे

# तत्त्वसन्दर्भः

[ श्रीश्रीजीवगोस्वामिसंपादितः ]



श्रीबलदेवविद्याभूषणकृत-वैद्याभूषण्या,

श्रीराधामोहनगोस्वामिकृतराधामोहिन्या च

समलंकृतः



प्रकाशन-स्थानम्

अच्युत-ग्रन्थमाला-कार्यालयः, वाराणसी

२०१४ वि०

# तत्त्वसन्दर्भस्य भूमिका

अथेदं प्रकाश्यते श्रीजीवगोस्वामिसंपादितं षट्सन्दर्भेषु प्रथमं तत्त्वसन्दर्भो नाम ग्रन्थरत्नम् । बहुभ्यो वर्षेभ्यः पूर्वमस्य ग्रन्थस्य विशिष्य संपादनं श्रीमन्माध्वसंप्रदायाचार्य-दार्शनिकसार्वभौम-न्यायरत्ने-त्याद्युपाधिकैः श्रीदामोदरलालगोस्वामिभिः प्रारब्धम् । परन्तु समाप्त-प्राये प्रथमस्यास्य तत्त्वसन्दर्भस्य मुद्रणे प्रत्यूहव्रातैराक्रान्तस्यास्य तदानीं सम्पूर्णं मुद्रणं प्रकाशनं च न समजनि । तेषु पूज्यचरणेषु श्रीकृष्णसायुज्यं गतेषु श्रीविश्वनाथसायुज्यप्राप्त-भक्तप्रवर-श्रेष्ठिवर-श्रीगौरीशङ्करगोयनकासमर्पित-द्रव्यनिधिसंरक्षित-श्रीविश्वनाथपुस्तकालया ध्यक्षैरच्युतग्रन्थमालासंपादकपण्डितवरश्रीकृष्णपन्तमहोदयैर्द्वित्रवर्षेभ्यः पूर्वं प्रेरितेन मया सम्पूर्णस्य षट्संदर्भात्मकस्य ग्रन्थस्य विशिष्य संपादनभारं स्वीकृत्यापि बहुविघ्नाक्रान्ततयाऽद्यावधि संपादनं कर्तुं नापारि । परन्त्वितोऽनन्तरं परमेशकृपयाऽग्रिमकार्यं विशिष्य कर्तुं शक्येतेति मया संभाव्यते ।

अत्र षण्णां गोस्वामिनां विषये विशेषतश्च ग्रन्थकारजीव-गोस्वामिविषये चेतिवृत्तम्, ग्रन्थान्तरङ्गबहिरङ्गपरीक्षणम्, प्रचलित-द्वैताद्वैतविशिष्टशुद्धाद्वैतादिमतेभ्यो ग्रन्थप्रतिपादितमतानां कियतांशेन भेदः समानत्वम्, ग्रन्थकारप्रतिपादिततत्त्वानां संकलनं समालोचन-प्राप्ताक्षेपपरिहरणं चेत्यादि बहुवक्तव्यमस्ति, तत्सम्पूर्णे ग्रन्थे मुद्रिते विशिष्य भूमिकादिषु विवेचयिष्यते ।

बहूनां ग्रन्थस्यास्य निरन्तरं स्वाध्यायशीलिनामेवं पाठकर्तॄणां च सूचनास्ति—यदि महाकलेवरस्यास्य ग्रन्थस्य प्रतिसन्दर्भं

षण्णां सन्दर्भाणां सारांशसंकलनं ग्रन्थान्ते स्वातन्त्र्येण वा मुद्राप्य प्रकाश्येत, तर्हि महान्त उपकारा भवेयुर्महतो ग्रन्थस्यास्य पठनमवधारणं च कर्तुं बिभ्यत्सु पाठकेष्विति। तेषां तन्निवेदनं संपादकमहोदयेभ्यः श्रावितम्। तेभ्यस्तद्यथा रोचेत, तथा ते तद्विषये व्यवस्थां विधास्यन्ति।

अत्र स्थितशुद्धिपत्राधारेण ग्रन्थः संशोध्य पठ्यतामिति निवेद्यान्ते यस्य कृपाकटाक्षनिक्षेपादृतेऽकिञ्चिद्ज्ञो मानवः कार्यं संपादयितुं प्रभुर्न भवति, तं काशीरक्षकपरमेश्वरं प्रणम्य, सफलयन्तु ग्रन्थसंपादकपरिश्रममिति पाठकान् संप्रार्थयते—

श्रीकृष्णजन्माष्टमी
२०१४ वि०

श्री अनन्तशास्त्री फड़के
( व्याकरणाचार्यो मीमांसातीर्थो वेदान्तकेसरी
वाराणसेयराजकीयसंस्कृतमहाविद्यालय-
प्राध्यापकः )

# षट्सन्दर्भेषु तत्त्वसन्दर्भस्य विषय-सूची

———

* श्रीकृष्णो जयतितराम् *

# षट्सन्दर्भे

प्रथमः

## तत्त्वसन्दर्भः



कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।

## वैद्याभूषणी

* श्रीश्रीगौरहरिर्जयति *

भक्त्याभासेनापि तोषं दधाने धर्म्माध्यक्षे विश्वनिस्तारिनाम्नि ।
नित्यानन्दाद्वैतचैतन्यरूपे तत्त्वे तस्मिन्नित्यमास्तां रतिर्नः ॥
मायावादं यस्तमःस्तोममुच्चैर्नाशं निन्ये वेदवागंशुजालैः ।
भक्तिर्विष्णोर्दर्शिता येन लोके जीयात् सोऽयं भानुरानन्दतीर्थः ॥

गोविन्दाभिधमिन्दिराश्रितपदं हस्तस्थरत्नादिवत्
तत्त्वं तत्त्वविदुत्तमौ क्षितितले यौ दर्शयाञ्चक्रतुः ।
मायावादमहान्धकारपटलीसत्पुष्पवन्तौ सदा
तौ श्रीरूपसनातनौ विरचिताश्चर्य्यौ सुवर्य्यौ स्तुमः ॥

वैद्याभूषणी ।

यः साङ्ख्यपङ्केन कुतर्कपांशुना विवर्त्तगर्त्तेन च लुप्तदीधितिम् ।
शुद्धं व्यधाद्वाक्सुधया महेश्वरं कृष्णं स जीवः प्रभुरस्तु नो गतिः ॥

आलस्यादप्रवृत्तिः स्यात् पुंसां यद्ग्रन्थविस्तरे ।
अतोऽत्र गूढे सन्दर्भे टिप्पन्यल्पा प्रकाश्यते ॥

श्रीमज्जीवेन ये पाठाः सन्दर्भेऽस्मिन् परिष्कृताः ।
व्याख्यायन्ते त एवामी नान्ये ये तेन हेलिताः ॥

श्रीबादरायणो भगवान् व्यासो ब्रह्मसूत्राणि प्रकाश्य, तद्भाष्यभूतं श्रीभागवतमाविर्भाव्य शुकं तदध्यापितवान्। तदर्थं निर्णेतुकामः श्रीजीवः प्रत्यूहकुलाचलकुलिशं वाञ्छितपीयूषबलाहकं स्वेष्टवस्तुनिर्देशं मङ्गलमाचरति—कृष्णेति । निमिनृपतिना पृष्टः करभाजनो योगी सत्यादियुगावतारानुक्त्वा, अथ "कलावपि तथा शृणु" इति तमवधाप्याह—कृष्णवर्णमिति ।

सुमेधसो जनाः कलावपि हरिं भजन्ति, कैरित्याह—सङ्कीर्त्तनप्रायैर्यज्ञैरर्चनैरिति । कीदृशं तमित्याह—कृष्णो वर्णो रूपं यस्यान्तरिति शेषः, त्विषा कान्त्या त्वकृष्णः, "शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः" इति गर्गोक्तिपारिशेष्याद्विद्युद्गौरमित्यर्थः । अङ्गे—नित्यानन्दाद्वैतौ, उपा-

## राधामोहनी

श्रीकृष्णचैतन्य-श्रीनित्यानन्द-श्रीमदद्वैताचार्यचन्द्रा जयन्ति ।

चैतन्यं परमानन्दमद्वैतं द्वैतकारणम् ।
श्रीकृष्णं राधया सार्धं प्रणमामि जगत्पतिम् ॥

यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ॥ १ ॥
अन्तः कृष्णं बहिर्गौरं दर्शिताङ्गादिवैभवम् ।
कलौ सङ्कीर्त्तनाद्यैः स्मः कृष्णचैतन्यमाश्रिताः ॥ २ ॥

---

वैद्याभूषणी ।

ङ्गानि—श्रीवासादयः, अस्त्राणि—अविद्याच्छेत्तृत्वाद्भगवन्नामानि, पार्षदाः—गदाधरगोविन्दादयस्तैः सहितमिति महाबलित्वं व्यज्यते। गर्गवाक्ये 'पीतः' इति प्राचीनतदपेक्षया। अयमवतारः श्वेतवराहकल्पगताष्टाविंशमन्वन्तरीयकलौ बोध्यः, तत्रत्ये श्रीचैतन्य एवोक्तधर्म्मदर्शनात्; अन्येषु कालेषु क्वचित् शुकपत्राभत्वेन व्यक्तेरुक्तेः; "छन्नः कलौ यदभवः" इति, "शुक्लो रक्तस्तथा पीतः" इति, "कलावपि तथा शृणु" इति च। ये विमृशन्ति, ते सुमेधसः। छन्नत्वञ्च प्रेयसीत्विषावृतत्वं बोध्यम्।

अङ्काः पूर्व्वाङ्कतोऽत्रामी टिप्पनीक्रमबोधकाः ।
द्विबिन्दवस्ते विज्ञेया विषयाङ्कास्त्वबिन्दवः ॥

अत्र ग्रन्थे स्कन्धाध्यायसूचका युग्माङ्का ग्रन्थकृतां सन्ति, तेभ्योऽन्ये ये टिप्पनीक्रमबोधायाऽस्माभिः कल्पितास्ते द्विबिन्दुमस्तकाः; विषयवाक्येभ्यः परे येऽङ्कास्ते त्वबिन्दुमस्तका बोध्याः ॥ १ ॥

कृष्णवर्णपद्यव्याख्याव्याजेन तदर्थमाश्रयति—अन्तरिति, स्फुटार्थः॥२॥

राधामोहनी ।

अस्य ग्रन्थस्य मुख्याभिधेयश्रीकृष्णसङ्कीर्तनरूपमङ्गलं कुर्वन् तस्य मुख्योपास्यतां प्रमाणयन्नेकादशस्थपद्यं दर्शयति—त्विषाऽकृष्णमिति—कनकमिवोज्ज्वलम्। सुमेधस इति—श्रीकृष्णकीर्तनं कलौ परमश्रेयस्त्वेन शास्त्राचार्यविवेचितमिति सूचयति ॥ १ ॥

स्वभजनस्य सम्प्रदायप्रवर्तनायावतीर्णं गौररूपेण श्रीकृष्णं तदनुमतव्याख्या-

जयतां मथुराभूमौ श्रीलरूपसनातनौ ।
यौ विलेखयतस्तत्त्वं ज्ञापकौ पुस्तिकामिमाम् ॥ २ ॥
कोऽपि तद्बान्धवो भट्टो दाक्षिणद्विजवंशजः ।

---

वैद्याभूषणी ।

अथाशीर्नमस्काररूपं मङ्गलमाचरति—जयतामिति । श्रीलौ ज्ञानवैराग्यतपःसम्पत्तिमन्तौ रूपसनातनौ मे गुरुपरमगुरू जयतां निजोत्कर्षं प्रकटयताम् । मथुराभूमाविति तत्र तयोरध्यक्षता व्यज्यते, तयोर्जयोऽस्त्वित्याशास्यते । जयतिरत्र तदितरसर्वसद्वृन्दोत्कर्षवचनः, तदुत्कर्षाश्रयत्वात्तयोस्तत्सर्वनमस्यत्वमाक्षिप्यते; तत्सर्वान्तःपातित्वात् स्वस्य तौ नमस्याविति च व्यज्यते । तौ कीदृशावित्याह—याविमां सन्दर्भाख्यां पुस्तिकां विलेखयतः—तस्या लिखने मां प्रवर्त्तयतः । बुद्धौ सिद्धत्वादिमामित्युक्तिः । तत्त्वं ज्ञापकौ—

"तत्त्वं वाद्यप्रभेदे स्यात् स्वरूपे परमात्मनि ।" इति विश्वकोषात् परेशं सपरिकरं ज्ञापयिष्यन्तावित्यर्थः, कर्त्तरि भविष्यति ण्वुल् षष्ठीनिषेधस्तु "अकेनोर्भविष्यदाधमर्ण्ययोः" ( पा० २।३।७० ) इति सूत्रात् ॥ २ ॥

ग्रन्थस्य पुरातनत्वं स्वपरिष्कृतत्वञ्चाह—कोऽपीति । तद्बान्धवस्तयोर्बन्धुः, गोपालभट्ट इत्यर्थः । वृद्धवैष्णवैः श्रीमध्वादिभिर्लिखिताद्

राधामोहनी ।

सम्पत्तये पुनः प्रणमति—अन्तःकृष्णमिति । आश्रिता इति—वयमिति शेषः ॥२-७॥

विविच्य व्यलिखद् ग्रन्थं लिखिताद् वृद्धवैष्णवैः ॥ ४ ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम् ।
पर्य्यालोच्याऽथ पर्य्यायं कृत्वा लिखति जीवकः ॥ ५ ॥
यः श्रीकृष्णपदाम्भोजभजनैकाभिलाषवान् ।
तेनैव दृश्यतामेतदन्यस्मै शपथोऽर्पितः ॥ ६ ॥
अथ नत्वा मन्त्रगुरून् गुरून् भागवतार्थदान् ।

---

वैद्याभूषणी ।

ग्रन्थात् तं विविच्य विचार्य्य सारं गृहीत्वा ग्रन्थमिमं व्यलिखत् ॥ ४ ॥

तस्य भट्टस्याद्यं पुरातनं ग्रन्थनालेखं पर्य्यालोच्य जीवको मल्लक्षणः पर्य्यायं कृत्वा क्रमं निबध्य लिखति, 'ग्रन्थ सन्दर्भे' चौरादिकः, ततो "ण्यासश्रन्थो युच्" (पा० ३।३।१०७) इति कर्म्मणि युच्, ग्रन्थना ग्रन्थस्तस्य लेखं लिखनम्, भावे घञ् । तं लेखं कीदृशमित्याह— क्रान्तं क्रमेण स्थितम्, व्युत्क्रान्तं व्युत्क्रमेण स्थितम्, खण्डितं छिन्नमिति स्वश्रमस्य सार्थक्यम् ॥ ५ ॥

ग्रन्थस्य रहस्यत्वमाह—यः श्रीति । कृष्णपारतम्येऽन्येनानादृते तस्यामङ्गलं स्यादिति तन्मङ्गलायैतत्, न तु ग्रन्थावद्यभयात्; तस्य सुव्युत्पन्नैर्निरवद्यत्वेन परीक्षितत्वात् ॥ ६ ॥

अथेति—

"गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता तथा ।
नानार्थवत्त्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः ॥"

श्रीभागवतसन्दर्भं सन्दर्भं वश्मि लेखितुम् ॥ ७॥

यस्य ब्रह्मेति संज्ञां क्वचिदपि निगमे याति चिन्मात्रसत्ताऽ-
प्यंशो यस्यांशकैः स्वैर्विभवति वशयन्नेव मायां पुमांश्च ।

---

वैद्याभूषणी ।

इत्यभियुक्तोक्तलक्षणं सन्दर्भं लेखितुं वश्मि वाञ्छामि, श्रीभागवतं संदृभ्यते ग्रथ्यतेऽत्रेति "हलश्च" ( पा० ३।३।१२१ ) इत्यधिकरणे घञ् ॥ ७ ॥

अथ श्रोतृरुच्युत्पत्तये ग्रन्थस्य विषयादीननुबन्धान् संक्षेपेण तावदाह—यस्येति । स स्वयं भगवान् श्रीकृष्ण इह जगति तत्पादभाजां तच्चरणपद्मसेविनां स्वविषयकं प्रेम विधत्तामर्पयतु । स क इत्याह—यस्य स्वरूपानुबन्ध्याकृतिगुणविभूतिविशिष्टस्यैव श्रीकृष्णस्य चिन्मात्रसत्ता अनभिव्यक्ततत्तद्विशेषा ज्ञानरूपा विद्यमानता क्वचिदपि निगमे कस्मिंश्चित् "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २।१।१ ) "अस्तीत्येवोपलब्धव्यः" ( क० ६।१३ ) इत्यादिरूपे श्रुतिखण्डे ब्रह्मेति संज्ञां याति, तादृशतया चिन्तयतां तथा प्रतीतिमासीदतीत्यर्थः । भक्तिभा-

राधामोहनी ।

"वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥" ( भा० १।२।११ ) इति ।

श्रीभावगतीयश्लोकतात्पर्यं पद्येन दर्शयति—यस्येति । क्वचिदपि निगमे—ब्रह्मसंहितादौ, यस्य चिन्मात्रसत्ता ब्रह्मेति संज्ञां याति—नियतमाश्रयतीत्यन्वयः । चित्—ज्ञानम्, तन्मात्रं तन्मयं स्वस्वरूपभूतज्ञानवद्वस्तुसत्ता, स्वस्वरूपभूतसत्पदप्रवृत्तिनिमित्तवदित्यर्थः, "सत्यं ज्ञानमनन्तं ब्रह्म"(तै०२।१।१)इति श्रुतेः । तथा च श्रीकृष्णः—

एकं यस्यैव रूपं विलसति परमव्योम्नि नारायणाख्यं
स श्रीकृष्णो विधत्तां स्वयमिह भगवान् प्रेम तत्पादभाजाम्॥८॥

वैद्याभूषणी ।

वितमनसां तु व्यञ्जिततच्चद्विशेषा सैव पुरुषत्वेन प्रतीता भवतीति बोध्यम्, 'सत्यं ज्ञानम्' इत्युपक्रान्तस्यैवानन्दमयपुरुषत्वेन निरूपणात्।

अत एवमुक्तं जितन्ते स्तोत्रे—

"न ते रूपं न चाकारो नायुधानि न चास्पदम् ।
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥" इति ।

न चैवं प्राचीनाङ्गीकृतमिति वाच्यम्, उक्तरीत्यां तस्याप्यनभीष्टत्वाभावात् । यस्य कृष्णस्यांशः पुमान् मायां वशयन्नेव स्वैरंशकैर्विभवति । कारणार्णवशायी सहस्रशीर्षा पुरुषः सङ्कर्षणः कृष्णांशः प्रकृतेर्भर्त्ता, तां वशे स्थापयन्नेव स्ववीक्षणक्षुब्धया तयाऽण्डानि सृष्ट्वा, तेषां गर्भेष्वम्बुभिरर्द्धपूर्णेषु सहस्रशीर्षा प्रद्युम्नः सन्, स्वैरंशकैर्मत्स्यादिभिर्विभवति, विभवसंज्ञकान् लीलावतारान् प्रकटयतीत्यर्थः । यस्यैव कृष्णस्य नारायणा-

राधामोहनी ।

स्वस्वरूपभूतश्रीविग्रहधारि ब्रह्मेति भावः । एवं च ब्रह्मपदं ज्ञानपरं ज्ञानिपरं च; धर्मधर्मिणोरभेदात् प्रत्येकं तयोर्भेदाच्च। एवं शरीरशरीरिणोरपि भेदाभेदौ। एवं तच्छरीरविशिष्टस्यापि ब्रह्मत्वम्, विशिष्टस्य विशेष्यानतिरेकात्। यस्यांशः पुमांश्च परमात्मा प्रथमपुरुषः मायां प्रकृतिं वशयन् तद्गुणयोगेन स्वैरंशकैः स्वस्वरूपभूतजीवात्मरूपधर्मैः विभवति विविधो भवति । श्रीवैकुण्ठनाथस्य विलासरूपत्वं दर्शयति—एकमिति । रसामृतसिन्धावप्युक्तम्—

"सिद्धान्ततस्त्वभेदेऽपि श्रीशकृष्णस्वरूपयोः ।" इति ।

अथैवं सूचितानां श्रीकृष्णतद्वाच्यवाचकतालक्षणसम्बन्धतद्भजनलक्षणविधेयसपर्य्यायाभिधेयतत्प्रेमलक्षणप्रयोजनाख्यानामर्थानां निर्णयाय तावत् प्रमाणं निर्णीयते ।

वैद्याभूषणी ।

ख्यमेकं मुख्यं रूपम् आवरणाष्टकाद्बहिःस्थे परमव्योम्नि विलसति, स नारायणो यस्य विलास इत्यर्थः; अनन्यापेक्षिरूपः स्वयं भगवान्, प्रायस्तत्समगुणविभूतिराकृत्यादिभिरन्यादृक् तु विलास इति सर्व्वमेतच्चतुर्थसन्दर्भे विस्फुटीभविष्यद्वीक्षणीयम् ॥ ८ ॥

अथैवमिति । सूचितानां व्यञ्जितानां चतुर्णामित्यर्थः, श्रीकृष्णश्च ग्रन्थस्य विषयः, तद्वाच्यवाचकलक्षणश्च सम्बन्धः, तद्भजनम्—तच्छ्रवणकीर्त्तनादि, तल्लक्षणं यद्विधेयम्, तत्सपर्य्यायं यदभिधेयम्, तच्च तत्प्रेमलक्षणं प्रयोजनञ्च पुरुषार्थस्तदाख्यानाम् । एकवाच्यवाचकत्वं पर्य्यायत्वम्, समानः पर्य्यायोऽस्येति सपर्य्यायः, समानार्थकसहशब्देन समा-

राधामोहनी ।

श्रीशेति श्रीराधयोरप्यैक्यं सूचयति । स्फुरदुर्व्विति भगवद्विशेषणं प्रेमविशेषणं चेति । अत्रायं विवेकः—यदा ज्ञानानन्दतात्पर्येण ब्रह्मशब्दप्रयोगस्तदा धर्मत्वम्, यदा ज्ञानादिमत्तात्पर्येण ब्रह्मशब्दप्रयोगस्तदा अंशत्वम्; यदा शरीरित्वेन ज्ञानादिमत्त्वेन च प्रबोधयितुं प्रयुक्तो ब्रह्मशब्दस्तदा सम्पूर्णभगवत्परः, कृष्णशरीरादेरपि ज्ञानानन्दस्वरूपकृष्णस्वरूपतया सच्चिदानन्दविग्रह इत्यादिप्रयोग इति ॥ ८ ॥

अथेति । प्रमाणं विनिर्णीयत इत्यनेनास्यान्वयः, किमर्थं प्रमाणविनिर्णय इत्यत आह—एवं सूचितानामिति । तत्र श्रीभागवतसन्दर्भं वच्मीत्यनेन श्रीकृष्णस्वरूपतद्भजनयोरभिधेयत्वं तयोर्वाच्यवाचकतालक्षणसम्बन्धश्च सूचितः । "प्रेम दद्यान्न-

तत्र पुरुषस्य भ्रमादिदोषचतुष्टयदुष्टत्वात् सुतरामलौकिका-

वैद्याभूषणी ।

सादस्वपदविग्रहो बहुव्रीहिः । "वोपसर्ज्जनस्य" (पा० ६।३।८२) इति सूत्रात् सहस्य सादेशः ।

"सहशब्दस्तु साकल्ययौगपद्यसमृद्धिषु ।
सादृश्ये विद्यमाने च सम्बन्धे च सह स्मृतम् ॥" इति श्रीधरः ।

तत्रेति । पुरुषस्य व्यावहारिकस्य व्युत्पन्नस्यापि भ्रमादिदोषग्रस्तत्वात्तादृक्पारमार्थिकवस्तुस्पर्शानर्हत्वाच्च तत्प्रत्यक्षादीनि च सदोषाणीति योज्यम् । भ्रमः प्रमादो विप्रलिप्सा करणापाटवञ्चेति जीवे चत्वारो दोषाः । तेष्वतस्मिंस्तद्बुद्धिः—भ्रमः, येन स्थाणौ पुरुषत्वबुद्धिः । अनवधानताऽन्यचित्ततालक्षणः—प्रमादः, येनाऽन्तिके गीयमानं गानं न गृह्यते ।

राधामोहनी ।

जन्वयः" इत्यनेन भजनस्य विधेयत्वं प्रेम्णः फलत्वं सूचितम् । श्रीकृष्णेति तद्भजनोपलक्षणम्, तेन कृष्णतद्भजनयोर्वाच्यता ग्रन्थस्य वाचकतेति परस्परसम्बन्धो दर्शितः, श्रीकृष्णसम्बन्धकथनात् तस्याभिधेयतालाभः । भजनस्य विधेयतयाऽभिधेयत्वमिति विशेषाय स्वातन्त्र्येण तत्कीर्त्तनम् । विधेयपर्य्यायाभिधेयेत्यस्य विधेयलक्षणाभिधेयेत्यर्थः । एवं च भागवतसन्दर्भमित्यस्य, भगवत इदं श्रीकृष्णस्वरूपतद्भजनम् , तस्य सन्दर्भं काण्डम् , तत्त्वतो निर्णायकवाक्यजातमिति पर्य्यवसितोऽर्थः । वच्मीत्यस्य कथयामीत्यर्थः । वस्तुतस्तु भागवतसन्दर्भम्—भगवद्भजनप्रतिपादकश्रीभागवताख्यग्रन्थस्य सन्दर्भम्—अर्थनिर्णायकवाक्यजातं वच्मीत्यर्थः । एवं च श्रीभागवतस्य प्रयोजनाभिधेयसम्बन्धा एवास्य ग्रन्थस्य प्रयोजनाभिधेयसम्बन्धा इति ज्ञेयम् । तत्रेति प्रमाणेष्वित्यर्थः । तत्प्रत्यक्षादीन्यत्रास्यान्वयः । तत्प्रत्यक्षादीनि—लौकिकपुरुषप्रत्य-

चिन्त्यस्वभाववस्तुस्पर्शायोग्यत्वाच्च तत्प्रत्यक्षादीन्यपि सदोषाणि ॥

वैद्याभूषणी ।

वञ्चनेच्छा—विप्रलिप्सा, यया शिष्ये स्वज्ञातोऽप्यर्थो न प्रकाश्यते । इन्द्रियमान्द्यम्—करणापाटवम्, येन दत्तमनसाऽपि यथावद् वस्तु न परिचीयते । एते प्रमातृजीवदोषाः प्रमाणेषु सञ्चरन्ति । तेषु भ्रमादित्रयं प्रत्यक्षे, तन्मूलकेऽनुमाने च । विप्रलिप्सा तु शब्दे इति बोध्यम् । प्रत्यक्षादीन्यष्टौ भवन्ति प्रमाणानि । तत्रार्थसान्निकृष्टं चक्षुरादीन्द्रियम्—प्रत्यक्षम् । अनुमितिकरणम्—अनुमानम्, अग्न्यादिज्ञानमनुमितिः, तत्करणं धूमादिज्ञानम् । आप्तवाक्यम्—शब्दः । उपमितिकरणम्—उपमानम्, गोसदृशो गवय इत्यादौ संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः, तत्करणं सादृशज्ञानम् । साधकान्यार्थकल्पनम्—अर्थापत्तिः, यथा दिवाऽभुञ्जाने पीनत्वं रात्रिभोजनं कल्पयित्वा साध्यते । अभावग्राहिका—अनुपलब्धिः, भूतले घटानुपलब्ध्या यथा घटाभावो गृह्यते । सहस्रे शतं सम्भवेदिति बुद्धौ सम्भावना—सम्भवः । अज्ञातवक्तृकं परम्पराप्रसिद्धम्—ऐतिह्यम्, यथेह तरौ यक्षोऽस्ति, इत्येवमष्टौ ॥

राधामोहनी ।

क्षादीनि । तेनेश्वरप्रत्यक्षस्य सदोषत्वव्यावृत्तिः । आदिना अनुमानोपमानानुपलब्धिपरिग्रहः, सदोषाणि भ्रमजनकतया सम्भावितानि, तेनापुरुषप्रत्यक्षादेः क्वचिद्वस्तुसाधकत्वे अनुमानस्येश्वरसाधकत्वेऽपि च न क्षतिः । प्रत्यक्षादेः सदोषत्वे हेतुः—दुष्टत्वादित्यन्तम् । भ्रमादीत्यादिना प्रमादविप्रलिप्साकरणापाटवपरिग्रहः ॥

ततस्तानि न प्रमाणानीत्यनादिसिद्धसर्वपुरुषपरम्परासु

वैद्याभूषणी ।

ततस्तानि न प्रमाणानीति । ततो भ्रमादिदोषयोगात् तानि प्रत्यक्षादीनि परमार्थप्रमाकरणानि न भवन्ति । मायामुण्डावलोके तस्यैवेदं मुण्डमित्यत्र प्रत्यक्षं व्यभिचारि । वृष्ट्या तत्कालनिर्वापितवह्नौ चिरं धूमप्रोद्गारिणि गिरौ वह्निमान् धूमादित्यनुमानञ्च व्यभिचारि दृष्टम् । आप्तवाक्यञ्च तथा, एकेनाप्तेन मुनिना समर्थितस्यार्थस्यापरेण तादृशेन दूषितत्वात् । अत उक्तम्—"नाऽसावृषिर्यस्य मतं न भिन्नम्" इति । एवं मुख्यानामेषां सदोषत्वात्तदुपजीविनामुपमानादीनां तथात्वं सुसिद्धमेव । किञ्च, आप्तवाक्यं लौकिकार्थग्रहे प्रमाणमेव, यथा हिमाद्रौ हिममित्यादौ । तदुभयनिरपेक्षञ्च तत्, दशमस्त्वमसीत्यादौ । तदुभयागम्ये साधकतमञ्च तत्, ग्रहाणां राशिषु सञ्चारे यथा । किञ्च, आप्तवाक्येनानुगृहीतं तदुभयं प्रमापकम् । दृष्टचरमायामुण्डकेन पुंसा सत्येऽप्यविश्वस्ते तस्यैवेदं मुण्डमिति नभोवाण्याऽनुगृहीतं प्रत्यक्षं यथा । अरे शीतार्त्ताः पान्था माऽस्मिन्नग्निं सम्भावयत, वृष्ट्या निर्व्वाणोऽत्र दृष्टः, किन्त्वमुष्मिन् धूमोद्गारिणि गिरौ सोऽस्तीत्याप्तवाक्येनानुगृहीतमनुमानं च यथेति ।

राधामोहनी ।

ततः पुरुषप्रत्यक्षादेः सदोषत्वात् तानि—पुरुषप्रत्यक्षादीनि न प्रमाणानि—नेश्वरतद्भजनयोर्याथार्थ्येन साधनसमर्थानि । अत्रैव हेत्वन्तरम्—सुतरामचिन्त्यालौकिकवस्तुस्पर्शायोग्यत्वाच्चेति । अनुमानस्येश्वरसाधनत्वसम्भवेऽपि श्रीकृष्णरूपतद्भजनसाधनायोग्यत्वम् ।

सर्वलौकिकालौकिकज्ञाननिदानत्वादप्राकृतवचनलक्षणो वेद एवास्माकं सर्वातीतसर्वाश्रयसर्वाचिन्त्याश्चर्य्यस्वभावं वस्तु विविदि-

वैद्याभूषणी ।

तदेवं प्रत्यक्षानुमानशब्दाः प्रमाणानीत्याह मनुः—

"प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्य्यं धर्म्मशुद्धिमभीप्सता ॥"

( मनु० १२।१०५ ) इति ।

एवमस्मद्वृद्धाश्च । सर्वपरम्परासु—ब्रह्मोत्पन्नेषु देवमानवादिषु सर्वेषु वंशेषु ।

"परम्परा परीपाट्यां सन्तानेऽपि वधे क्वचित् ।" इति विश्वः ।

लौकिकज्ञानम्—कर्म्मविद्या, अलौकिकज्ञानम्—ब्रह्मविद्या, अप्राकृतेति "वाचा विरूपनित्यया" इति मन्त्रवर्णात्,

राधामोहनी ।

ननु वेद एवेत्येवकारासङ्गतिः ? वेदार्थविवेकेऽनुमानापेक्षणात्, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ०२।४।५) इत्यादिश्रुतेः । अस्यार्थः;—आत्मा वै आत्मैव, द्रष्टव्यः साक्षात्कर्तव्यः, कथमित्यपेक्षायामाह—श्रोतव्य इत्यादित्रयम् । तत्र श्रवणं वेदेतिहासपुराणादिभ्यः कार्यम्, "श्रोतव्यः श्रुतिवाक्येभ्यः" इति श्रवणात् । बहुवचनं गणार्थम्, तेन पुराणादिपरिग्रहः । वेदार्थप्रतीतावपि तत्रार्थान्तरपरत्वसम्भावनयाऽप्रामाण्यशङ्का, तस्याः सम्भवेनाह—'मन्तव्यः' इति । मननं बहुभिर्हेतुभिरनुमानम्, "मन्तव्यश्चोपपत्तिभिः" इति श्रवणात् । तथा च तर्कानुगृहीतेन मननेन वेदादवगतमर्थं सम्यक्तयाऽवधार्य पुनः पुनर्ध्यानरूपनिदिध्यासनं कार्यम्, तत आत्मसाक्षात्कार इति पर्यव-

षतां प्रमाणम् ॥

तच्चानुमतम्––"तर्काप्रतिष्ठानात्" (ब्र०सू०२।१।११) इत्यादौ,

---

वैद्याभूषणी ।

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्व्वाः प्रवृत्तयः ॥" इति स्मरणाच्च ।

स्फुटमन्यत् ॥

ननु कोऽयमाग्रहो वेद एवास्माकं प्रमाणमिति चेत्, तत्राह–– तच्चानुमतामिति––श्रीव्यासाद्यैरिति शेषः । तद्वाक्यान्याह––तर्केत्यादीनि

राधामोहनी ।

सितोऽर्थः । आत्मपदं चात्र परमेश्वरपरम् "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (श्वे०३।८) इत्यादिश्रुत्येकवाक्यत्वात् । न च "न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति" (बृ०२।४।५) इत्यादिजीवात्मानमुपक्रम्य "आत्मा वा अरे द्रष्टव्यः" इत्युक्तत्वादात्मपदं जीवात्मपरमिति वाच्यम्, "न वा अरे पत्युः कामाय" इत्यादिना स्वात्मोपाधिकपत्यादिनिष्ठप्रियत्वाख्यानेन स्वात्मसुखस्यैव परमप्रयोजनत्वमुक्त्वा, परमात्मसुखस्य सर्वतोऽतिशयस्य प्राप्तये सर्वथा यतितव्यमित्याशयेन 'आत्मा द्रष्टव्यः' इत्युपसंहारात् ॥

"ब्रह्मविदाप्नोति परम्"(तै०२।१।१)इत्यादि श्रुतेश्चेति चेत्, न; वेदनिरपेक्षस्यानुमानस्य लोकातीतश्रीकृष्ण-तल्लीलाश्रवणादिभजनासाधनत्वात् । 'तर्काप्रतिष्ठानात्' इति वेदान्तसूत्रस्य शास्त्रविनाकृतानुमानस्य वस्त्वसाधकत्वादित्यर्थः । अचिन्त्याः लोकातीततया दुर्घटत्वेन प्रतीयमानाः, भावाः––ईश्वरगुणलीलादिरूपाः शास्त्रप्रसिद्धाः । तर्केण––स्वमतिकल्पितानुमानेन, योजयेत्––मायिकत्वादिरूपेण कल्पयेदिति वच-

"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।" (म०भा०भी०४।५।१२) इत्यादौ, "शास्त्रयोनित्वात्" (ब्र०सू०१।१।३) इत्यादौ, "श्रुतेस्तु शब्दमूलत्वात्" (ब्र०सू०२।१।२७) इत्यादौ,

"पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर !।
श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ।" (भा० ११।२०।४)

इत्यादौ च ॥

---

वैद्याभूषणी ।

साध्यसाधनयोरपीत्यन्तानि । तर्केति—ब्रह्मसूत्रखण्डः, तस्यार्थः—परमार्थनिर्णयस्तर्केण न भवति, पुरुषबुद्धिवैविध्येन तस्य नष्टप्रतिष्ठत्वात्। एवमाह श्रुतिः—

"नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ" (क०१।२।९) इति। व्याप्यारोपेण व्यापकारोपस्तर्कः, यद्ययं निर्वह्निः स्यात्, तदा निर्धूमः स्यादित्येवंरूपः। स च व्याप्तिशङ्कां निरस्यन्ननुमानाङ्गं भवेत्, अत-

राधामोहनी ।

नार्थः। शास्त्रं योनिः प्रमाणमस्येति सूत्रार्थः। यद्वा, शास्त्रस्य योनिः कारणं तत्त्वात्। तथा च शास्त्रस्य परमकारुणिकयथार्थसर्वार्थदर्शिप्रतारणादिदोषरहितपरमेश्वरप्रणीतत्वेन शास्त्रमेव गरीयः प्रमाणमिति ।

ननु शास्त्रस्य परमेश्वरप्रणीतत्वे किं मानम्? इत्यतो वेदान्तसूत्रं दर्शयति "श्रुतेस्तु शब्दमूलत्वात्" इति। तुकारः अन्यप्रमाणतः प्रमाण्यसूचनाय । श्रुतेः वेदस्य, शब्दमूलत्वात्—"अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः" (बृ० १।४।१०) इत्यादि "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वे० ६।१८) इत्यादिश्रुतिरूपः शब्दः, मूलं परमेश्वरप्रणीतत्वे प्रमाणं

वैद्याभूषणी ।

स्तर्केणानुमानं ग्राह्यमिति । 'अचिन्त्याः' इत्युद्यमपर्वणि(?) दृष्टम् । 'शास्त्र' इति ब्रह्मसूत्रम्, नेत्याकृष्यम् । उपास्यो हरिरनुमानेनोपनिषदा वा वेद्य इति सन्देहे, "मन्तव्यः" बृ० ४।४।५) इति श्रुतेरनुमानेन स वेद्य इति प्राप्ते, नानुमानेन वेद्यो हरिः, कुतः? शास्त्रमुपनिषद् योनिर्वेदनहेतुर्यस्य तत्त्वात्, "औपनिषदं पुरुषं पृच्छामि" (बृ० ३।९।२६) इत्याद्या हि श्रुतिः । श्रुतेस्त्विति ब्रह्मसूत्रम्, नेत्यनुवर्त्तते । ब्रह्मणि कर्त्तरि लोकदृष्टाः भ्रमादयो दोषा न स्युः, कुतः? "सोऽकामयत बहु स्यां प्रजायेय" (तै० २।६) इति सङ्कल्पमात्रेण निखिलसृष्टिश्रवणात् ।

राधामोहनी ।

यस्याः तत्त्वात् । पितृदेवेति । तव वेदश्चक्षुरिति समन्वयः । चक्षुः—ज्ञापकम्, श्रेयः—उत्तमम् । अनुपलब्धे—प्रत्यक्षाद्यगोचरे, अर्थे—त्वत्स्वरूपगुणलीलादिरूपे । साध्यम्—प्रेमादिरूपफलम्, साधनम्—तत्साधनम्, तयोरपीत्यर्थः । श्रीमन्माध्वभाष्ये त्वेवं व्याख्यातं "श्रुतेस्तु शब्दमूलत्वात्" इति—"न चेश्वरपक्षे अयं विरोधः । "योऽसौ विरुद्धोऽविरुद्धोऽनुरागवाननुरागवानिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मा" इति पैङ्ग्यादिश्रुतेरेव शब्दमूलत्वाच्च न विरोधः ।

"यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात् क्वचित् ।
विरोधे वाक्ययोः क्वापि किञ्चित्साद्गुण्यकारणम् ॥"

इति पुरुषोत्तमतन्त्रे" इति ।

ननु वेदस्य प्रामाण्ये सिद्धे एव वेदावगतपरमेश्वरप्रणीतत्वकवेदस्य बलवत्त्वमवधार्यम्, तच्च न सम्भवति, परस्पराश्रयादिति चेत्, नः स्थावरजङ्गमप्राणिनां सुखदुःखादिवैचित्र्येण मन्दमध्योत्तमयोनिवैचित्र्येण च तेषां कर्मवैचित्र्यमेव तद्वैचि-

तत्र च वेदशब्दस्य सम्प्रति दुष्पारत्वाद् दुरधिगमार्थत्वाच्च

---

वैद्याभूषणी ।

ननु श्रुतिर्बाधितं कथं ब्रूयादिति चेत्, तत्राह—शब्देति । अविचिन्त्यार्थस्य शब्दैकप्रमाणकत्वात् । दृष्टश्चैतन्मणिमन्त्रादौ । पितृदेवत्युद्धवोक्तिरेकादशे, हे ईश्वर ! तव वेदः पित्रादीनां श्रेयः श्रेष्ठं चक्षुः । केत्याह—'अनुपलब्धेऽर्थे' इत्यादि । तथा च वेद एवास्माकं प्रमाणमिति मद्वाक्यं सर्वसम्मतमिति नाऽपूर्वं मयोक्तम् ॥

एवं चेत्, ऋगादिवेदेनाऽस्तु परमार्थविचारस्तत्राह—तत्र च वेदशब्दस्येति । तर्हि न्यायादिशास्त्रैर्वेदार्थनिर्णेतृभिः सोऽस्त्विति चेत्, तत्राह—

राधामोहनी ।

न्यकारणं वाच्यम्, कारणान्तरादर्शनात् । तानि च कर्माणि शास्त्रतोऽवगम्य अनादिशिष्टपरम्परया क्रियमाणानि दृश्यन्ते, शास्त्रोक्तकर्मणां केषांचित् फलानि च दृश्यन्ते, ज्योतिरायुर्वेदादिशास्त्राणि दृष्टफलानि सुप्रसिद्धानीति वेदस्य प्रमाण्यमवधार्यते । एवं 'वेदः पौरुषेयो वाक्यत्वात्' इत्याद्यनुमानेनापि परमेश्वरप्रणीतत्वं वेदस्य सिध्यति; तदन्यस्यालौकिकवेदार्थानवगन्तृत्वादिति सिद्धं परमेश्वरप्रणीतो वेदः प्रमाणम् । एवमनुमानेन वेदस्य प्रमाण्यसिद्धावपि वेदस्य नित्यनिर्दोषपरमेश्वरप्रणीतत्वेन तदर्थस्यानुमानादिना बाधस्यायोगाद् वेदस्य प्रामाण्यम् । अनुमानस्य नानाविधत्वेऽपि अनुकूलतर्कसहकृतस्य प्रामाण्यमवगन्तव्यम् । वेदार्थविचार एव सदनुमानं विधेयमित्यपि बोध्यमिति दिक् ॥

दुष्पारत्वादिति । केषांचिद्वेदानामुच्छन्नत्वात् केषाञ्चित् प्रच्छन्नत्वाच्चेति भावः । तदर्थनिर्णायकानां वेदान्तसूत्रादिकारिणां मुनीनां व्यासकणादादीनाम् । वेदरूपः—गौण्या निरूढलक्षणया वेदशब्दप्रतिपाद्यः, नात्मविदितः—अप्रचरद्रूप-

तदर्थनिर्णायकानां मुनीनामपि परस्परविरोधाद् वेदरूपो वेदार्थ-निर्णायकश्चेतिहासपुराणात्मकः शब्द एव विचारणीयः। तत्र च यो वा वेदशब्दो नात्मविदितः सोऽपि तद्दृष्ट्याऽनुमेय एवेति सम्प्रति तस्यैव प्रमोत्पादकत्वं स्थितम्। तथा हि महाभारते मानवीये च—

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।"

( म० भा० आ० १।२९३ ) इति ।

"पूरणात् पुराणम्" इति चाऽन्यत्र ।

न चाऽवेदेन वेदस्य बृंहणं सम्भवति, न ह्यपरिपूर्णस्य कनकवलयस्य त्रपुणा पूरणं युज्यते ।

ननु यदि वेदशब्दः पुराणमितिहासञ्चोपादत्ते, तर्हि* पुराण-

वैद्याभूषणी ।

तदर्थनिर्णायकानामिति । तस्यैवेति—इतिहासपुराणात्मकस्य वेदरूपस्ये-त्यर्थः । समुपबृंहयेदिति—वेदार्थं स्पष्टीकुर्य्यादित्यर्थः । पूरणादिति ।

राधामोहनी ।

त्वात्। तद्दृष्ट्या—इतिहासपुराणदृष्ट्या । समुपबृंहयेदिति । वेदयति विहितनि-षिद्धं परतत्त्वस्वरूपं च ज्ञापयतीति वेदस्तम्, अभिधेयप्रकाशतया पूरयेत् ; इति-हासपुराणयोर्वेदशास्त्रान्तर्भूतत्वं जानीयादिति यावत्। नामव्युत्पत्त्याऽपि वेदसमुपबृंह-णमाह—पूरणादिति। वेदपूरणादित्यर्थः। 'पुराणम्' इति ह्रस्वः संज्ञायाम्। बृंहणम्—पूरणम्, पुराणम्—वेदशब्देनोपादीयमानं पुराणम् । अन्यवत्—उच्छन्नप्रच्छन्नवेद-वत्। अन्वेषणीयमिति—इदानीं प्रचरत्पुराणेतिहासयोर्वेदव्यवहाराभावादिति भावः।

* 'पुराणादिकमन्यवत्' इति पाठान्तरम् ।

मन्यदन्वेषणीयम्, यदि तु न, न तर्हीतिहासपुराणयोरभेदो वेदेन ? उच्यते—विशिष्टैकार्थप्रतिपादकपदकदम्बस्याऽपौरुषेय-

वैद्याभूषणी ।

वेदार्थस्येति बोध्यम् । त्रपुणा—सीसकेन । पुराणेतिहासयोर्वेदरूपतायां कश्चिच्छङ्कते—नन्वित्यादिना । तत्र समाधत्ते—उच्यते इत्यादिना । निखिलशक्तिविशिष्टभगवद्रूपैकार्थप्रतिपादकं यत् पदकदम्बमृगादिपुराणान्तं तस्येति । ऋगादिभागे स्वरक्रमोऽस्ति, इतिहासपु-

राधामोहनी ।

पदकदम्बस्येति—वेदघटकस्य पुराणेतिहासघटकस्य चेत्यादेः । अपौरुषेयत्वात्—जीवाप्रणीतत्वात्, परमेश्वरप्रणीतत्वादिति यावत् । अभेदेऽपि—वेदशब्दप्रतिपाद्यत्वेऽपि, स्वरक्रमभेदात्—स्वरक्रमयोर्भेदात्, भेदनिर्देशः—वेदपुराणयोर्भेदेन व्यवहारः । स्वरः—अनुदात्तोदात्तादिरूपः । तथा च अनुदात्तोदात्तादिस्वरभेदेनाध्ययनविधिविषयता वेदस्य । पुराणेतिहासयोर्नानुदात्तादिस्वरभेदेनाऽध्ययनविधिविषयता, किन्तु—

"इतिहासपुराणानि श्रुत्वा भक्त्या विशांपते ! ।
मुच्यते सर्वपापेभ्यो ब्रह्महत्यादिभिर्विभो !* ॥
ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् ।
श्रुत्वाऽन्यवर्णजाद्राजन् ! वाचकान्नरकं व्रजेत ॥"

तथा—"देवार्चामग्रतः कृत्वा ब्राह्मणानां विशेषतः ।

---

* मत्स्यपुराणे तु श्लोकोऽयमित्थं पठ्यते—

इतिहासपुराणानि श्रुत्वा भक्त्या द्विजोत्तमाः ! ।
मुच्यते सर्वपापेभ्यो ब्रह्महत्याशतञ्च यत ॥ ( म० भाग० ७।३ ) ।

त्वादभेदेऽपि स्वरक्रमभेदाद् भेदनिर्देशोऽप्युपपद्यते। ऋगादिभिः सममनयोरपौरुषेयत्वेनाऽभेदो माध्यन्दिनश्रुतावेव व्यज्यते—

---

वैद्याभूषणी ।

राणभागे तु स नास्ति इत्येतदंशेन भेदः । एवं वेति मैत्रेयीं पत्नीं प्रति

राधामोहनी ।

ग्रन्थिश्च शिथिलं कुर्याद्वाचकः कुरुनन्दन ! ॥

पुनर्बध्नीत तत्सूत्रं न मुक्त्वा धारयेत् क्वचित् ।

हिरण्यं रजतं गाश्च तथा कांस्योपदोहनाः ॥

दत्वा च वाचकायेह श्रुतस्याप्नोति यत्फलम् ।"

कांस्योपदोहनाः—कांस्यक्रोडाः ।

"वाचकः पूजितो येन प्रसन्नास्तस्य देवताः ।"

तथा—"ज्ञात्वा पर्वसमाप्तिं च पूजयेद्वाचकं बुधः ।

आत्मानमपि विक्रीय स इच्छेत् सफलं क्रतुम् ॥"

तथा—"विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा ।

कलस्वरसमायुक्तं रसभावसमन्वितम् ॥

बुध्यमानः सदा ह्यर्थं ग्रन्थार्थं कृत्स्नशो नृप ! ।

ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप ! ॥

य एवं वाचयेद्विद्वान् स विप्रो व्यास उच्यते ॥"

तथा—"सप्तस्वरसमायुक्तं काले काले विशाम्पते ! ।

प्रदर्शयन् रसान् सर्वान् वाचयेद्वाचको नृप ! ॥"

इति तिथितत्त्वनैयतकालिककल्पतरुधृतभविष्यपुराणादिवचनानुसारेणाऽध्ययनविषयेतेति विशेषादिति भावः । क्रमभेदः—उपक्रमोपसंहारविशेषनियमित आनुपूर्वीविशेषः । ऋगाद्याख्यानुपूर्वीविशेषवत्त्वं वेदपदप्रवृत्तिनिमित्तम्, स्वरविशेषेणाध्ययनविधिविषयतावच्छेदकम् , शूद्रस्याऽध्ययनश्रवणादिनिषेधविषयतावच्छेदकं च । पु-

"एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः

---

वैद्याभूषणी ।

याज्ञवल्क्यवचनम्। अरे—मैत्रेयि! अस्य—ईश्वरस्य, महतो—विभोः,

राधामोहनी ।

राणाद्यानुपूर्वीमत्त्वं च शूद्राद्यध्ययननिषेधविषयतावच्छेदकम्, श्रवणविधिविषयतावच्छेदकं चेति वेदपुराणाद्योरपौरुषेयत्वाविशेषेऽपि भेदनिर्देशः। विशिष्टैकार्थप्रतिपादकत्वापौरुषेयत्वसाम्येन गौण्या लक्षणया पुराणादौ वेदशब्दप्रयोगः। वस्तुत एवं विधिनिषेधवाक्यब्रह्मप्रतिपादकवाक्यकदम्बानां केनापि प्रमाणेन लोके प्रागनवगतार्थपराणामपौरुषेयाणां वेदत्वम्, पुराणादीनां च परमदयालुना भगवता स्वयं स्त्री-शूद्र-ब्रह्मबन्धूनां श्रवणाद्यर्थं वेदादनन्तरोक्तानां वेदादवगतार्थबोधकतया न तत्र वेदशब्दस्य मुख्या वृत्तिः, किन्तु गौणी वृत्तिः। तथा भेदेऽपि मुख्यगौणवेदशब्दप्रतिपादितानां वेदपुराणेतिहासानामेकग्रन्थत्वम्, ब्रह्मवेदनरूपैकप्रतिपत्तिकत्वात्; "सर्वे वेदा यत्पदमामनन्ति" ( क० २।१५ ) इति श्रुतेः। वेदपुराणेतिहासानामभेदेऽपि न वेदमपेक्ष्य पुराणेतिहासयोर्न्यूनत्वम्, परन्तु तुल्यप्रधानभावः, अपौरुषेयत्वेन स्वतः प्रमाणतस्तौल्यात्। यद्वा, वेदशब्दस्य शक्तिद्वयी, एका—ऋगाद्यानुपूर्वीविशेषरूपेण, अपरा च—अपौरुषेयत्वेन ऋगादिवेदचतुष्टयपुराणेतिहाससाधारणी, इति वृत्तिद्वयस्वीकारफलं चोक्तमेवाऽवधेयम्। तत्र वेदपूरणं नाम वेदोत्थापिताकाङ्क्षानिवर्तनम्। तदुक्तम्—

"अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्।" इति।

अर्थैक्यम्—तात्पर्यविषयार्थप्रतिपत्तेरैक्यम्—वेदस्थले तात्पर्यविषयताप्रतिपत्तिर्ब्रह्मतत्त्वनिर्णयः। एकं वाक्यम्—एको ग्रन्थः, विभागे—ग्रन्थयोः पृथगुपन्यासेऽपि। अत्र आकाङ्क्षा—वेदादर्थप्रतिपत्तौ सत्यां तत्राऽसम्भावनादिना कथमेतदर्थसङ्गतिः? इति शिष्यजिज्ञासा, तन्निवृत्तिश्च पुराणेतिहासाभ्यां क्रियत इति वेदमपेक्ष्य पुराणेतिहासयोरुत्कर्षप्रतीतिरिति वेदपुराणयोरेकग्रन्थत्वे पुराणेतिहासयोर्वेदार्थसंग्राहकत्वेन

सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणम्" (बृ०२।४।१०) इत्यादिना ॥

अत एव स्कान्दप्रभासखण्डे—

"पुरा तपश्चचारोग्रममराणां पितामहः ।
आविर्भूतास्ततो वेदाः सषडङ्गपदक्रमाः ॥
ततः पुराणमखिलं सर्वशास्त्रमयं ध्रुवम् ।
नित्यशब्दमयं पुण्यं शतकोटिप्रविस्तरम् ॥
निर्गतं ब्रह्मणो वक्त्रात्तस्य *भेदान्निबोधत ।
····ब्राह्मं पुराणं प्रथमम् ॥" (स्कं०प्र० २।३–५) इत्यादि ।

अत्र शतकोटिसंख्या ब्रह्मलोके प्रसिद्धेति तथोक्तम् ।

तृतीयस्कन्धे च—

"ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः ।"(भा० ३।१२।३७)

इत्यादिप्रकरणे—

"इतिहासपुराणानि पञ्चमं वेदमीश्वरः ।
सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥"(भा० ३।१२।३९) इति ।

---

वैद्याभूषणी ।

पूज्यस्य वा; भूतस्य—पूर्व्वसिद्धस्य ।  स्फुटार्थमन्यत् ॥

पुरेत्यादौ वेदानां पुराणानाञ्चाऽऽविर्भाव उक्तः, ससृजे—आविर्भाव-

राधामोहनी ।

पौनरुक्त्यदोष इति परास्तम् , वेदचतुष्टयार्थविवरणरूपत्वात्तयोरिति ॥

---

* स्क० पु० प्र०—वक्त्रादित्यस्याऽनन्तरं दृश्यतेऽयं पाठः—"···ब्राह्मं वैष्णवमेव च । शैवं भागवतञ्चैव ॥" इत्यादिः ।

अपि चाऽत्र साक्षादेव वेदशब्दः प्रयुक्तः पुराणेतिहासयोः ।
अन्यत्र च—

"पुराणं पञ्चमो वेदः ।"

"इतिहासः पुराणञ्च पञ्चमो वेद उच्यते ।"

"वेदानध्यापयामास महाभारतपञ्चमान् ॥" इत्यादौ ।

---

वैद्याभूषणी ।

यामास । समानेति । यज्ञदत्तपञ्चमान् विप्रानामन्त्रयस्व इतिवत् । कार्ष्णमिति—कृष्णेन व्यासेनोक्तमित्यर्थः । अत एवेति । पञ्चमवेद-

राधामोहनी ।

समानजातीयनिवेशितत्वादिति-समानजातीय एव पूरकेऽन्वयात्, स्वान्वयितावच्छेदकधर्मावच्छेदेनैव पूरणादिति यावत् । वेदगतसङ्ख्याया अवेदेन पूरणं न भवतीति पर्यवसितम् । "वेदानां वेदम्"इति—ऋगादिचतुर्णां वेदानामर्थवेदकं पुराणमित्यर्थः । अत एव—श्रुतिस्मृतिभिरितिहासपुराणयोः पञ्चमत्वनिरुक्तैरेव । अन्तर्भूतत्वकल्पनयेति चतुर्णां वेदानामन्तर्भूतकल्पनम्-'अस्य महतो भूतस्य निःश्वसितम्—ऋग्वेदः प्रथमः, ततो यजुर्वेदः, ततः सामवेदः, ततोऽथर्वाङ्गिरसः-अथर्ववेदः, तेष्वितिहासपुराणम्'—इति श्रुत्यर्थकल्पनात् । तत्राऽयमभिप्रायः—'तस्मात्तपस्तेपानाच्चत्वारो वेदा अजायन्त, ऋचः सामानि जज्ञिरे' इत्यत्र सामान्यतो वेदचतुष्टयमुक्त्वा तद्विवरणम् 'ऋचः' इत्यादि । तपस्तेपानात्—ईश्वरात् । तथा "महतो भूतस्य" इति श्रुतावपि वेदचतुष्टयकथनानन्तरं तद्घटकेतिहासपुराणमाह । अन्यथा न वा* "अस्य महतो भूतस्य" इति श्रुतौ "इतिहासः पुराणम्" (बृ० ४।५।११) इत्यनन्तरम् "विद्या उपनिषत्" ( बृ० ४।५।११ ) इत्यादिश्रवणात् विद्योपनिषदामपि वेदचतुष्टयानन्तर्गतत्वापत्तिः, प्रसिद्धभारतादीतिहासब्राह्मादिपुराणानां

---

* 'न वा' इत्यस्य सङ्गतिः सुधीभिरनुसन्धेया ।

अन्यथा वेदानित्यादावपि पञ्चमत्वं नाऽवकल्पेत, समानजातीयनिवेशितत्वात् संख्यायाः ।

भविष्यपुराणे—

"कार्ष्णञ्च पञ्चमं वेदं यन्महाभारतं स्मृतम् ।" इति ।

तथा च सामकौथुमीयशाखायां छान्दोग्योपनिषदि च—

"ऋग्वेदं भगवोऽध्येमि यजुर्व्वेदं सामवेदमाथर्वणं चतुर्थमितिहासं पुराणं पञ्चमं वेदानां वेदम्" ( छा० ७।२।१ ) इत्यादि,

---

वैद्याभूषणी ।

त्वश्रवणादेवेत्यर्थः । चतुर्ण्णामेवान्तर्भूतत्वेति । भगवन्निःश्वसितभूते ये इतिहासपुराणे ते चतुर्ण्णामेवान्तर्गते, तेष्वेव यत् पुरावृत्तम्, यच्च पञ्चल-

राधामोहनी ।

वेदार्थसङ्ग्राहकत्वेन व्यासादिकृतत्वेन च प्रसिद्धिर्न तेपामपौरुषेयत्वम्, तथा ऋगादिर्वेदमध्ये "संयुं प्रजापतिं देवा अब्रुवन्" इत्याद्युपक्रम्य "यो ब्राह्मणायावगुरेत्तं शतेन यातयेत्" इत्यादिश्रुतेः "अवचनेनैव प्रोवाच ( नृ० उ० ता०७ ) इत्यादिश्रुतेश्चेतिहासरूपत्वात्, "यतो वा इमानि भूतानि जायन्ते" (तै० ३।१।१) इत्यादिश्रुतेः "एतस्मादात्मन आकाशः सम्भूतः" ( तै० २।१।१। ) इत्यादिश्रुतेः "स ब्रह्मणा सृजति रुद्रेण विलापयति हरिरादिरनादिः" इत्यातिश्रुतेश्च सर्गविसर्गनिरोधभगवदवतारादिकथनलक्षणपुराणरूपत्वाच्च केपाञ्चिदुच्छन्नप्रच्छन्नतयाऽऽधुनिकानां जनानामज्ञातत्वात्, प्रचद्रूपाणामपि दुरूहत्वात व्यासेन तदर्थान् सङ्कलय्य भारतादीतिहासपुराणानि कृतानीति बोध्यम् । प्रसिद्धप्रत्याख्यानं प्रसिद्धानां भारतब्राह्मादीनां वेदत्वप्रत्याख्यानं निरस्तमिति । इतिहासपुराणयोः श्रुतौ क्रमिकजातत्वेन कथनादितिहासस्य पञ्चमत्वम्, पुराणस्य षष्ठत्वम्, यद्यपि वक्तु-

अत एव "अस्य महतो भूतस्य" इत्यादावितिहासपुराणयोश्चतुर्णामेवाऽन्तर्भूतत्वकल्पनया प्रसिद्धप्रत्याख्यानं निरस्तम्। तदुक्तम्—

"ब्राह्मं पुराणं प्रथमम्" इत्यादि ॥

पञ्चमत्वे कारणञ्च वायुपुराणे सूतवाक्यम्—

"इतिहासपुराणानां वक्तारं सम्यगेव हि ।
माञ्चैवं प्रतिजग्राह भगवानीश्वरः प्रभुः ॥

---

वैद्याभूषणी ।

क्षणमाख्यानम्, ते एव तद्भूते ग्राह्ये, न तु ये व्यासकृतत्वेन भुवि ख्याते शूद्राणामपि श्रव्ये इति कर्म्मठैर्यत् कल्पितं तन्निरस्तमित्यर्थः ॥

पञ्चमत्वे कारणञ्चेति । ऋगादिभिश्चतुर्भिश्चातुर्होत्रं चतुर्भिर्ऋत्विग्भिर्निष्पाद्यं कर्म्म भवति, इतिहासादिभ्यां तन्न भवतीति तद्भागस्य

राधामोहनी ।

मुचितम्, तथापीतिहासपुराणयोर्वेदार्थविवरणरूपत्वेनैक्यमादृत्य पञ्चमत्वमुक्तं स्वतन्त्रेच्छत्वाद्भगवतः । श्रुतौ प्रागितिहासनिःसरणं ततः पुराणमिति क्रमनिर्देशाद् व्यासेन तत्क्रमेणैव तयोराविर्भावनम् । तेन भारतानन्तरमेव पुराणसंग्रहः कृत इति ।

"अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥"

इति वचनस्यार्थः—सत्यवतीसुतः अष्टादशपुराणं कृत्वा भारताख्यानमखिलं पूर्णं चक्रे, 'खिल' शब्दस्योनार्थत्वात्, तदुपबृंहितम्-वेदार्थैर्युक्तम् । यद्वा, अखिलम्—तद्देवलोकादिगतसर्वं भारताख्यानम्, तदुपबृंहितम्-पूर्णं चक्रे इत्यन्वयः, न तु अष्टादशपुराणानि कृत्वा भारतं चक्रे इत्यन्वयः, श्रुत्यादिविरोधापत्तेः । अत एव वक्ष्य-

एक आसीद् यजुर्वेदस्तं चतुर्द्धा व्यकल्पयत् ।
चातुर्होत्रमभूत्तस्मिंस्तेन यज्ञमकल्पयत् ॥
आध्वर्य्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथैव च ।
औद्गात्रं सामभिश्चैव ब्रह्मत्वञ्चाऽप्यथर्वभिः ॥
( पूर्वभा० ६०।१५-१८ )

आख्यानैश्चाऽप्युपाख्यानैर्गाथाभिर्द्विजसत्तमाः ।

---

वेद्याभूषणी ।

पञ्चमत्वमित्यर्थः । आख्यानैः—पञ्चलक्षणैः पुराणानि, उपाख्यानैः—पुरावृत्तैर्गाथाभिश्छन्दोविशेषैश्च संहिता भारतरूपाश्चक्रे । ताश्च "यच्छिष्टं तु यजुर्वेदे" तद्रूपा इत्यर्थः ।

राधामोहनी ।

माणगरुडपुराणभागवतलक्षणे—"अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः ।" इत्युक्तम् । तदुक्तमिति-प्रसिद्धपुराणस्य वेदत्वमुक्तम् ॥ १३ ॥

यजुर्वेदस्य वेदसामान्यरूपत्वकथनम् ऋक्सामाथर्ववेदातिरिक्तस्य यजुर्वेदत्वलाभाय । अत एवोक्तम्—"यजुः सर्वत्र गीयते" इति चतुर्धाविभागनिमित्तमध्वर्युत्वादिकार्यभेद इति भावः । "यच्छिष्टन्तु यजुर्वेदे" इति । अध्वर्युत्वलक्षणवेदेभ्यः कांश्चिद्वेदानादाय यजुरादिनामभेदेन विभागे कृते यदवशिष्टं तदपि यजुर्वेदनामकमित्यर्थः । न च "अस्य महतो भूतस्य" ( बृ० २।४।१०-४।५।११, मै० ६।३२ ) इति श्रुतौ ऋगादिक्रमेणैव जातत्वात् कथमेकस्य यजुर्वेदस्य ऋगादिभेदेन विभागो व्यासकृत इति वाच्यम् , ऋगादिक्रमेण वेद उद्भूतः, तत्र यजुर्वेदस्य प्रचुरत्वेन समुदितस्य यजुर्वेदत्वेनैकत्वेन च व्यवहारात्तथोक्तेः ; "आधिक्येन व्यपदेशा भवन्ति" इति न्यायात् । ऋगादिभेदेन वेदस्य चतुर्धा व्यवहारस्य प्राक् सत्त्वेऽपि तदधिकारिभेदकार्यभेदव्यवस्थया व्यासेन व्यवस्थापनात्तस्य विभागकृत्त्वव्यपदेश इति भावः ।

पुराणसंहिताश्चक्रे पुराणार्थविशारदः ॥

यच्छिष्टं तु यजुर्वेद इति शास्त्रार्थनिर्णयः । ”(६०।२१–२२) इति ब्रह्मयज्ञाध्ययने च विनियोगो दृश्यतेऽमीषाम्—“यद्ब्राह्मणानीतिहासपुराणानि”इति । सोऽपि नाऽवेदत्वे सम्भवति । अतो यदाह भगवान् मात्स्ये—

वैद्याभूषणी ।

ब्रह्मेति । ब्रह्मयज्ञे वेदाध्ययनेऽमीषामितिहासादीनां विनियोगो दृश्यते, सोऽपि विनियोगस्तेषामवेदत्वे न सम्भवति । कृत्वा—आविर्भाव्य । सङ्कलयामि—संक्षिपामि । अभिधेयभागः—सारांशः ।

राधामोहनी ।

आख्यानैरिति—प्रश्नोत्तरवचननिबन्धैः सूतशौनकसंवादरूपैरित्यर्थः । उपाख्यानैः—प्राथमिकग्रन्थाभिधेयप्रकाशकैः शुकपरीक्षित्संवादादिरूपैः । गाथाभिः—पुरावृत्तेतिहाससंवादाख्याभिरिति । पुराणसंहिताम्—पुराणसंग्रहं चक्रे इति । तथा च आख्यानादिभिः सुसज्जीकृत्य पुराणानि प्रादुश्चकार । यथोक्तं गीताव्याख्यायां स्वामिचरणैः—“प्रायेण भगवन्मुखनिःसृतानेव श्लोकान् व्यलिखत्, कांश्चित् तत्सङ्गतये स्वयं च व्यरचयत्” इति । व्यक्तं प्रथमस्कन्धे—

“स संहितां भागवतीं कृत्वाऽनुक्रम्य चाऽऽत्मजम् ।
शुकमध्यापयामास निवृत्तिनिरतं मुनिम् ॥”

( भा० १।७।८ ) इति ।

व्याख्यातं च प्रथमस्कन्धसन्दर्भे–“प्रथमतः सामान्यतः कृत्वा नारदोपदेशानन्तरमनुक्रम्य तत्सम्मत्याऽनुक्रमेण विशेषतः कृत्वा” इति । विनियोगः—अध्ययनविषयत्वेन विधेयत्वं नाऽवेदत्वे सम्भवति, ब्रह्मपदस्य वेद एव शक्तेरिति भावः ।

"कालेनाग्रहणं मत्वा पुराणस्य द्विजोत्तमाः ।
व्यासरूपमहं कृत्वा संहरामि युगे युगे ॥"(म०पु०५३।८-९) इति ।

पूर्वसिद्धमेव पुराणं सुखसंग्रहणाय सङ्कलयामीति तत्राऽर्थः । तदनन्तरं ह्युक्तम्—

"चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते ॥
अद्याऽप्यमर्त्त्यलोके तु शतकोटिप्रविस्तरम् ।
तदर्थोऽत्र चतुर्लक्षः संक्षेपेण निवेशितः ॥"(म०पु०५३।९-११)

अत्र तु *"यच्छिष्टं तु यजुर्वेदे" इत्युक्तत्वात्तस्याभिधेयभागश्चतुर्लक्षस्त्वत्र मर्त्त्यलोके संक्षेपेण सारसंग्रहेण निवेशितो, न तु रचनान्तरेण ॥

---

राधामोहनी ।

तदर्थ इति । तस्य शतकोटिप्रविस्तरस्य अर्थः—तात्पर्यविषयार्थोपसंहारो यत्र सः, चतुर्लक्ष इत्यर्थः । 'तदर्थः' इत्यस्य प्रकारान्तरेण स्वयमाह—'अत्र च' इत्यादि । पुराणेतिहासयोरपि 'यच्छिष्टम्' इत्यनेन ग्रहणम्, तस्याऽपि यजुर्वेदान्तर्गतत्वादिति भावः । तस्य यजुर्वेदभागस्याभिधेयभागो यत्र सः । 'अत्र' इत्यस्यार्थमाह—'मर्त्यलोके' इति । न तु रचनान्तरेणेति । यजुर्वेदाभिधेयभागविशेषात्मके पुराणविशिष्टस्य चतुर्लक्षत्वाश्रयस्य स्वरूपेणैवाभिहितः, न तु रचनान्तररूपेणेति भावः । वस्तुतः अभिधेयभागः पुराणतात्पर्यविषयीभूतोऽर्थ इत्यर्थः, न तु बहुव्रीहिणा ग्रन्थ इत्यर्थः । चतुर्लक्षः—चतुर्लक्षश्लोकात्मकग्रन्थप्रतिपाद्यः, संक्षेपेण—सारसंग्रहेण, यजुर्वेदात्—शतकोटिप्रविस्तरात्मकयजुर्वेदभागात् सारार्थसंग्राहकतद्घटकवाक्येनेति यावत् । निवेशितः= कृतः । अपौरुषेयपुराणवचनघटितश्चतुर्लक्षः पुराणमिति पर्यवसितम् ।

---

* 'अत्र च' इति पाठान्तरम् ।

तथैव दर्शितं वेदसहभावेन शिवपुराणस्य वायवीयसंहितायाम्—

"संक्षिप्य चतुरो वेदांश्चतुर्द्धा व्यभजत् प्रभुः ।
व्यस्तवेदतया ख्यातो* वेदव्यास इति स्मृतः ॥
पुराणमपि संक्षिप्तं चतुर्लक्षप्रमाणतः ।
अद्याप्यमर्त्यलोके तु शतकोटिप्रविस्तरम्" ॥

( वा० सं० १।३७-३८ ) इति ।

संक्षिप्तमित्यत्र तेनेति शेषः । स्कान्दमाग्नेयमित्यादिसमा-

---

वैद्याभूषणी ।

व्यस्तेति । व्यस्ता विभक्ता वेदा येन, तत्तया वेदव्यासः स्मृतः । स्कान्दमित्यादि—स्कन्देन प्रोक्तम्, न कृतमिति वक्तृहेतुका स्कान्दादि-

राधामोहनी ।

"अम्बरीष ! शुकप्रोक्तं नित्यं भागवतं शृणु ।"

इत्यनेनांशविशेषस्यैव भागवतत्वेन निर्देशः, तद्युक्तत्वेनाऽष्टादशसहस्रात्मकं भागवतमिति गीयत इति । एवं च भागवतशब्दोऽपौरुषेयपुराणभागविशेषपरः, "जन्माद्यस्य" ( भा० १ । १ । १ ) इत्यादि "विष्णुरातममूमुचत्" ( भा० १२।१३।२१) इत्यन्तग्रन्थपरश्च । यथा वेदशब्दोऽपौरुषेयत्वेन ऋग्वेदादिपुराणान्तपरश्चतुर्वेदपरश्चेति । एवं भारत-ब्राह्म-पाद्मादिपदं पुराणेतिहासपदं च बोध्यम् ॥

तेनेति शेष इति । तेन व्यासेन । समाख्याः सञ्ज्ञाविशेषाः । प्रवचननिबन्धनाः सर्गादौ प्रथमाध्यापकनामनिबन्धनाः । आनुपूर्वीति—उपक्रमोपसंहारपर्यन्तानुपूर्वीविशेषनिर्माणेन निबन्धनाः—निबन्धाः, स्वतन्त्रेच्छेन भगवतैव कृता इति यावत् । एवं चेतिहासमध्ये पुराणलक्षणसर्गप्रतिसर्गादिवर्णनसत्त्वेऽपि,

---

* 'लोके' इति पाठान्तरम् ।

ख्यास्तु प्रवचननिबन्धनाः, काठकादिवत्; आनुपूर्व्वीनिर्म्माण-निबन्धना वा । तस्मात् क्वचिदनित्यत्वश्रवणं त्वाविर्भावतिरो-भावापेक्षया । तदेवमितिहासपुराणयोर्वेदत्वं सिद्धम् । तथापि

वैद्याभूषणी ।

संज्ञा, कठेनाधीतं काठकम् इत्यादिसंज्ञावत् । कठानां वेदः काठकः, "गोत्रचरणाद् वुञ्" ( पा० ४।३।१२६ ) । "चरणाद्धर्म्माम्नाययोरिति वक्तव्यम्" इति सूत्रवार्त्तिकाभ्याम् । ततश्च कठेनाऽधीतम् इति सुष्ठूक्तम् । अन्यथा जन्यत्वेनानित्यतापत्तिः । आनुपूर्व्वी—क्रमः, ब्राह्ममित्यादि-क्रमनिर्म्माणहेतुका वा सा सा संज्ञेत्यर्थः । ब्राह्मादिक्रमेण पुराणभागो

राधामोहनी ।

पुराणमध्ये पौराणिकसंवादादिसत्त्वेऽपि तयोर्नाभभेदः स्वेच्छामयभगवत्कृतत्वादुपपन्न इति । यद्यपि चतुर्लक्षसमुदितवाक्यस्यापौरुषेयत्वं यथाश्रुतैतद्ग्रन्थतो लभ्यते, तथापि नारदोपदेशतदधीनवेदव्यासग्रन्थकरणप्रस्तावादेः परमेश्वरनिःश्वसितत्वं न घटते, व्यासप्रणयनपूर्वं प्रतीतपुराणादेः प्रच्छन्नत्वेनादर्शनात्, नारदोपदेशानन्तरं व्या-सेन पुनः प्रणयनादित्यादिविवेचनेन प्रचरद्रूपपुराणादिकं व्यासेन सज्जीकृतम् , तत्राभि-धेयार्थसंग्रहोऽपौरुषेण वाक्यजातेन कृतः, तत्सङ्गत्यर्थं प्रसङ्गतश्च वाक्यान्तराण्युक्तानीति तथा व्याख्यातम् । अनित्यत्वश्रवणं व्यासकृतत्वश्रवणनिबन्धनम् । वेदत्वं सिद्ध-मिति अपौरुषेयत्वरूपवेदत्वं सिद्धमित्यर्थः । 'व्यासरूपमहं कृत्वा' इत्यनेन व्या-सस्य भगवदवतारत्वकथनाद्व्यासकृतवेदपुराणादिसङ्ग्रहस्य स्वतः प्रमाणत्वमपि बोध्यम् । तथापि—पुराणादौ वेदत्वेऽपि, 'सूतादीनाम्' इति सूतादेर्विशेषग्रहणाच्च शूद्रसामान्यस्याऽधिकारः ।

"अध्येतव्यं न चाऽन्येन ब्राह्मणं क्षत्रियं विना ।
श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन ॥"

सूतादीनामधिकारः सकलनिगमवल्लीसत्फलश्रीकृष्णनामवत् ।

---

वैद्याभूषणी ।

बोध्यः । तथापि सूतादीनामिति । इतिहासादेर्वेदत्वेऽपि तत्र शूद्राद्यधिकारः 'स्त्रीशूद्रद्विजबन्धूनाम्' इत्यादिवाक्यबलाद्बोध्यः । तथा रथकारस्याग्न्याधानाङ्गे मन्त्रे तद्वाक्यबलादिति बोध्यम् । भारतव्यपदेशेनेति ।

राधामोहनी ।

इति पुराणमधिकृत्य भविष्यपुराणवचनात् सूतस्य च ब्राह्मणानुग्रहादधिकारः । तथाहि प्रायश्चित्तविवेकधृतपद्मपुराणे सूतवाक्यम्—

"न हि वेदेष्वधीकारः कश्चिच्छूद्रस्य जायते ।
पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिह ॥" इति ।

'वेदेषु' इत्यत्र वेदपदं ऋगादिचतुर्वेदपरम् ।

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ॥" (भा० १।४।२५)

इति प्रथमात् ।

तत्र त्रयीति चतुर्वेदोपलक्षणम् । यथा शुक्राचार्याज्ञया तत्कन्याया देवयान्या विवाहः क्षत्रियेणापि ययातिना कृतो न दोषाय जातः, तत्सन्तानयदुप्रभृतीनामुत्तमत्वं च,

"समयश्चाऽपि साधूनां प्रमाणं वेदवद्भवेत् ।"

इत्यादिवचनात् । समयः—प्रतिज्ञा । अत एव ब्राह्मणवचनेन परशुरामभयाद् ब्राह्मणसभायां गूढस्थितस्य कस्यचित् क्षत्रियस्य ब्राह्मणत्वं जातमित्युक्तं महाभारते ।

"तत्र कीर्तयतो विप्रा विप्रर्षेर्भूरितेजसः ।
अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात् ॥" ( भा० १।३।४३-४४ )

इति प्रथमात् चतुर्वेदपाठस्तु सूतादीनाप्यनधिकृतस्तत्र द्विजानामेवाधिका-

राधामोहनी ।

रात् । अत एव प्रथमे सूतं प्रति शौनकवाक्यम्—

"मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ।"

( भा० १ । ४ । १३ ) इति ।

छान्दसात्—वेदात् । तत्र हेतुवचनमुक्तं स्वामिचरणैः "अत्रैवर्णिकत्वात्" इति । तथाहि प्रथमे—

"अहो वयं जन्मभृतोऽद्य हास्म वृद्धानुवृत्त्यापि विलोमजाताः ।
दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥
कुतः पुनर्मे गृणतो नाम तस्य महत्तमैकान्तपरायणस्य ।
योऽनन्तशक्तिर्भगवानन्तो महद्गुणत्वाद्यमनन्तमाहुः ॥"

( भा० १ । १८ । १८-१९ ) इति ।

टीका च—भागवतव्याख्यानेन लब्धप्रसङ्गमात्मानं महत्तमादरपातं श्लाघते द्वाभ्याम् । 'अहो' इति आश्चर्ये, 'ह' इति हर्षे । 'वयम्' इति बहुवचनं श्लाघायाम् । प्रतिलोमजाता अपि अद्य जन्मभृतः—सफलजन्मानः, आस्म—जाताः, वृद्धानां—शौनकादीनाम्, अनुवृत्त्या—आदरेण, ज्ञानवृद्धः—शुकस्तस्य सेवयेति वा । यच्च दुष्कुलत्वं तन्निमित्तमाधिं च मनःपीडाम्, महत्तमानामभिधानयोगः—लौकिकोऽपि सम्भाषणलक्षणसम्बन्धः, विधुनोति—अपनयति । कुतः पुनः—किं वक्तव्यं तस्यानन्तस्य नाम गृणतः पुंसो महत्तमानामभिधानयोगो दौष्कुल्यमाधिं विधुनोतीति । यद्वा, नाम गृणतः कुतः पुनर्दौष्कुल्यम् । यद्वा, गृणतः पुंसस्तस्य नाम दौष्कुल्यं विधुनोतीति किं वक्तव्यमेव । अनन्ताः शक्तयो यस्यातोऽनन्तः, किञ्च महत्सु गुणा यस्य महद्गुणस्तस्य भावस्तत्त्वं तस्मात्, गुणतोऽप्यनन्तमाहुः इति । विलोमजातत्वं "ब्राह्मण्यां क्षत्रियात्सूतः" इत्युक्तलक्षणम् । अत एव भगवन्नामकथनादिनाऽप्यधिकारो ज्ञापितः । एवं च 'सूतादीनाम्' इति 'आदि' पदेन भगवद्भक्तियोगादिलक्षणगुणवतामन्येषां परिग्रहः । तथाहि भारते नहुषं प्रति युधिष्ठिरवाक्यम्—

राधामोहनी ।

"सत्यं दानं क्षमाशीलमानृशंस्यं तपो घृणा ।
दृश्यते यत्र नागेन्द्र ! स ब्राह्मण इति स्मृतः ॥

* * * *

यत्रैतन्न भवेत्सर्प ! तं शूद्रमिति निर्दिशेत् ॥"

( म० भा० व० प० १८० । २१–२६ ) इति ।

क्षत्रियादिरपि ब्राह्मणः—तत्तुल्यः, सत्त्वस्वभावत्वात् । शूद्रः—शूद्रतुल्यः, तमःस्वभावत्वात् । तथा प्रायश्चित्तविवेकधृतापस्तम्बवचनम्—

"तेषां तेजःप्रभावेण प्रत्यवायो न विद्यते ।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरजोऽवलः ॥" इति ।

तेषां—पूर्वेषाम् । अवरजः–अर्वाचीनः । एवमत्र वक्ष्यमाणानि "न शूद्रा भगवद्भक्ताः" इत्यादिवहुवचनानि तथाधिकारे द्रष्टव्यानीति ।

यत्तु—

"विप्रोऽधीत्याप्नुयात् प्रज्ञां राजन्योदधिमेखलाम् ।
वैश्यो निधिपतित्वं च शूद्रः शुध्यति पातकात् ॥"

( भा० १२ । १२ । ६४ )

इति द्वादशस्कन्धवचनात् शूद्रमात्रस्याधिकार इति वदन्ति, तन्न ; "श्रोतव्यमिह शूद्रेण" इत्यादिवचनविरोधात्, "सुगतिमाप्नुयात् श्रवणाच्च शूद्रयोनिः" इति हरिवंशीयाच्च । उदधिमेखलां पृथ्वीम्, सन्धिरार्ष इति । 'शूद्रोऽधीत्य' इत्यस्य चान्तर्भूतणिजन्तक्रियया 'पाठयित्वा' इत्यर्थः, 'पञ्चभिर्हलैः कर्षति गृही' इत्यादिवत् । भक्तिरत्र प्रेमलक्षणा । सामान्यभक्तिमभिप्रेत्य त्वाह माध्वभाष्यधृतव्योमसंहितावचनम्—

"अन्त्यजा अपि ये भक्ता नामज्ञानाधिकारिणः ।
स्त्रीशूद्रद्विजबन्धूनां तन्त्रज्ञानेऽधिकारिता ॥
एकदेशोपरक्ते तु न तु ग्रन्थपुरःसरे ।

यथोक्तं प्रभासखण्डे—

"मधुरमधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्लीसत्फलं चित्स्वरूपम् ।
सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर ! नरमात्रं तारयेत् कृष्णनाम ॥" इति ।

---

राधामोहनी ।

त्रैवर्णिकानां वेदोक्तं सम्यग्भक्तिमतां हरौ ।
आहुरप्युत्तमस्त्रीणामधिकारं च वैदिके ॥" इति ।

तन्त्रपदं वेदातिरिक्तशास्त्रपरम् । एकदेशोपरक्ते—मन्त्रपूजादौ । "वेदमन्त्रवर्जं शूद्रस्य" इति छन्दोगाह्निकधृतस्मृतौ वेदेति विशेषणात् "स्मार्तं शूद्रः समाचरेत्" इति मलमासतत्त्वधृतपिपानकारिकाश्रवणात् ।

"चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे ।
धर्मशास्त्राणि राजेन्द्र ! शृणु तानि नृपोत्तम ! ॥
विशेषतस्तु शूद्राणां पावनानि मनीषिभिः ।
अष्टादश पुराणानि चरितं राघवस्य च ॥
रामस्य कुरुशार्दूल ! धर्मकामार्थसिद्धये ।"

इत्यत्र मोक्षानुक्तिः प्राग्वचने 'श्रेयसे' इत्यनेन मोक्षस्य प्रधानतया स्वातन्त्र्येण कथनात् । एवं च स्त्रीशूद्रादीनां तन्त्रोक्तमन्त्रपूजादिना लब्धभगवद्भावाः संसारं तरन्तीति सूचनाय शूद्राणां पुराणाधिकारे दृष्टान्तमाह—कृष्णनामवदिति । कृष्णनाम्नो वेदोपरिभागत्वेपि तत्कीर्तनादौ प्रमाणवशान्नरमात्राधिकारः । तत्कीर्तनादिना नरमात्रस्य संसारतरणम् । तथा पुराणादौ प्रमाणवशात् सूतादेरध्ययनाधिकारः । शूद्रस्य पुराणाद्युक्तमन्त्रपाठतदुक्तभजनादिना संसारतरणं च भवतीति शूद्रपदेन ग्रहणम्, तदन्यस्य नाममात्राधिकारकथनादिति । मधुरेति, मधुरं सुखानुभावकम्, मधुरेभ्यो मधुरं निरतिशयमधुरमित्यर्थः । नाम्नि कृष्ण-

यथा चोक्तं विष्णुधर्म्मे—

"ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।
अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥" इति ॥

अथ वेदार्थनिर्णायकत्वञ्च वैष्णवे—

"भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः ।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नाऽत्र संशयः ॥" इत्यादौ ।

---

वैद्याभूषणी ।

दुरूहभागस्य व्याख्यानात्, छिन्नभागार्थपूरणाच्च पुराणे वेदाः प्रतिष्ठिता नैश्चल्येन स्थिता इत्यर्थः ।

राधामोहनी ।

स्याविर्भावात् स्वरूपतोऽर्थतश्च नाम्नि कीर्तिते सुखोदयादिति विषयसौन्दर्यमुक्तम् । मङ्गलं धर्मार्थदम्, मङ्गलानामिति श्रेष्ठमिति शेषः । यद्वा, मङ्गलानामपि मङ्गलमित्यर्थः । एतद्विशेषणद्वयेन त्रिवर्गसाधनत्वमुक्तम्, सकलनिगमवल्लीपर्यालोचनेन तस्याः सारतया समुद्धृतम् । चित्स्वरूपं नामनामिनोरभेदोपचारात् । हेलया अश्रद्धया, तारयेदिति प्रेमलक्षणभक्तिद्वारेति शेषः । "भक्त्या सञ्जातया भक्त्या" (भा०११ । ३ । ३१) । अधीताः—अध्ययनफलं प्राप्ता इति । तथा च यथा वेदेतिहासपुराणश्रवणावगततदर्थयाथार्थ्यमननादिद्वारा लब्धापरोक्षज्ञानः संसारान्मुक्तो भवति, तथा कृष्णनामकीर्तनाद्यवगतप्रेमा संसारान्मुक्तो भवतीति भावः । पुराणेतिहासयोर्थग्रन्थत्वे वेदार्थज्ञानाद्वेदाध्ययनापेक्षा नास्तीत्यभिप्रायेणाह—अथ वेदार्थनिर्णायकत्वं चेति । न च—"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । मत्वा च सततं ध्येयः" इति श्रवणात "स्वाध्यायोऽध्येतव्यः (श० ब्रा० ११ । ३ । ८ । ३ ) इत्यादिश्रुतेश्च कथं पुराणेतिहासश्रवणादेव ब्रह्मवेदनमिति वाच्यम्?

किञ्च, वेदार्थदीपकानां शास्त्राणां मध्यपातिताभ्युपगमेऽप्याविर्भावकवैशिष्ट्यात्तयोरेव वैशिष्ट्यम् । यथा पाद्मे—

"द्वैपायनेन यद् बुद्धं ब्रह्माद्यैस्तन्न बुध्यते ।
सर्वबुद्धं स वै वेद तद्बुद्धं नाऽन्यगोचरः" ॥

स्कान्दे—"व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् ।
अन्ये व्यवहरन्त्येतान्युरीकृत्य गृहादिव" इति ।

---

वैद्याभूषणी ।

किञ्चेति । वेदार्थदीपकानां मानवीयादीनां मध्ये यद्यपीतिहासपुराणयोः स्मृतित्वेनाभ्युपगमस्तथापि व्यासस्येश्वरस्य तदाविर्भावकत्वात्तदुत्कर्ष इत्यर्थः । तत्र प्रमाणम्—द्वैपायनेनेत्यादि ॥

व्यासेति । बादरायणस्य ज्ञानं महाकाशम्, अन्येषां ज्ञानानि तु

राधामोहनी ।

'श्रुतिवाक्येभ्यः' इति बहुवचनात् पुराणाद्युपग्रहः । अत एवोक्तम्—

"वेदानध्यापयामास महाभारतपञ्चमान् ।" इति ।

स्वाध्यायपदेनापि वेदपुराणाद्युपग्रहः । प्रतिष्ठिताः—निर्णीतार्थाः । वेदार्थदीपकानाम्—वेदार्थप्रकाशकानां वेदव्याख्यायकभाष्यादीनाम् । सर्वबुद्धं सर्वव्यस्तैर्मिलितैश्च पण्डितैर्बुद्धमिति । तद्बुद्धम्—समुदितमित्यर्थः । नन्वनेन वेदव्याख्यातृमध्ये व्यासस्य उत्तमत्वमुक्तम् । तथा च कथं वेदस्यापौरुषेयत्वमिति चेत्, न; वेदार्थानुवादपुराणानां बाहुल्यात् तद्विवेकेन यथा सारार्थवचनसङ्ग्राहकत्वं व्यासस्य, अन्येषां न तथा योग्यता । एवमपौरुषेयपुराणमेव विकृतमाकलय्य कानिचिद्वचनानि वेदपुराणादितात्पर्यार्थप्रकाशाय स्वयं कृतानि, तत्र पुराणादौ वचनतात्पर्यात् ॥

व्यासचित्तस्थिताकाशात्—व्यासहृदयाकाशात्, हृदयाकाशस्य वाक्यहेतुत्वात्

तथैव दृष्टं श्रीविष्णुपुराणे पराशरवाक्यम्—

"ततोऽत्र मत्सुतो व्यासः अष्टाविंशतिमेऽन्तरे ।
वेदमेकं चतुष्पादं चतुर्द्धा व्यभजत् प्रभुः ॥
यथाऽत्र तेन वै व्यस्ता वेदव्यासेन धीमता ।
वेदास्तथा समस्तैस्तैर्व्यासैरन्यैस्तथा मया ॥
तदनेनैव व्यासानां शाखाभेदान् द्विजोत्तम ! ।
चतुर्युगेषु रचितान् समस्तेष्ववधारय ॥

---

वैद्याभूषणी ।

तदंशभूतानि खण्डाकाशानीति तस्येश्वरत्वात् सार्वज्ञमुक्तम् ।

ततोऽत्र मत्सुत इत्यादौ च व्यासान्तरेभ्यः पाराशर्य्यस्येश्वरत्वान्महोत्कर्षः। 'नारायणात्' इत्यादौ चेश्वरत्वं प्रस्फुटमुक्तम्। गौतमस्य शापादिति ।

राधामोहनी ।

अवच्छिन्नानि यानि वाक्यानीत्यर्थः। अन्ये—मनुयः, व्यवहरन्ति—आपृथिवीगतलोका अध्ययनाध्यापनादिरूपव्यवहारं कुर्वन्ति । गृहादिवदिति—गृहधर्मान् यथा नियतं सम्यक् कुर्वन्ति, तथा व्यासोक्तशास्त्राध्ययनादितदुक्तानुष्ठानादिना व्यवहरन्तीत्यर्थः। गृहादिवेति पाठे व्यासचित्तस्थिाकाशस्य गृहतुल्यत्वम् । गृहात् स्वगृहात् द्रव्याण्यादाय ते व्यवहरन्ति, एवं व्यासचित्ताकाशात् कानिचिच्छास्त्राण्यादायेत्यर्थः। ततोऽत्रेति । ततः—दुर्मेधत्वादिना सकलवेदाध्ययनाद्यसामर्थ्यात । अत्र भूर्लोके, अन्तरे—वैवस्वतमन्वन्तरीयद्वापरयुगे । तथा विभक्ता एव, तैः प्रसिद्धैः । व्यासैरिति शिष्याभिप्रायेण बहुवचनम् । अन्यैः मुनिभिः, मया च पराशरेण च, व्यवहृता इति शेषः । तव ततः, अनेनैव दुर्मेधत्वादिदर्शनेन, व्यासानां रचितान् शाखाभेदान् व्यासैरन्यैः वेदव्यासभिन्नैर्व्यासैरित्यर्थः ।

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
कोऽन्यो हि भुवि मैत्रेय ! महाभारतकृद्भवेद् ॥" इति । (३ अं४।२)

स्कान्द एव—

"नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेः शापाज् ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥
शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्य्यस्तु भगवान् पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥" इति ।

---

वैद्याभूषणी ।

'वरोत्पन्ननित्यधान्यराशिर्गौतमो महति दुर्भिक्षे विप्रानभोजयत् । अथ सुभिक्षे गन्तुकामान् तान् हठेन न्यवासयत् । ते च मायानिर्मिताया गोर्गौतमस्पर्शेन मृताया हत्यामुक्त्वा गताः । ततः कृतप्रायश्चित्तोऽपि

राधामोहनी ।

वेदव्यासस्तु मत्सुतः कृष्णद्वैपायनाख्यः । अज्ञानतां नास्ति ज्ञानं स्वरूपहेतुज्ञानं यस्य तत्ताम्, सङ्कीर्णबुद्धयः—शुभाशुभविचारहीनबुद्धयः । वेदशब्देन—'उत्सन्नान् वेदान्' इत्यत्र वेदशब्देन । तदेवमिति—पुराणेतिहासयोरपौरुषेयत्वाद्वेदार्थनिर्णायकत्वाच्च सुष्ठु परमार्थज्ञापकत्वे इत्यर्थः । इतिहासपुराणविचार एव श्रेयानिति इदानीन्तनाना-मित्यादि । वेदानां दुरूहतया मन्दबुद्धीनां कलियुगीयलोकानां यथार्थावधारणस्य

वेदशब्देनाऽत्र पुराणादिद्वयमपि गृह्यते। तदेवमितिहासपुराणविचार एव श्रेयानिति सिद्धम्। तत्रापि पुराणस्यैव गरिमा दृश्यते। उक्तं हि नारदीये—

"वेदार्थादधिकं मन्ये पुराणार्थं वरानने!।
वेदाः प्रतिष्ठिताः सर्व्वे पुराणे नाऽत्र संशयः॥
पुराणमन्यथा कृत्वा तिर्य्यग्योनिमवाप्नुयात्।
सुदान्तोऽपि सुशान्तोऽपि न गतिं क्वचिदाप्नुयात्॥" इति॥

स्कान्दप्रभासखण्डे च—

"वेदवन्निश्चलं मन्ये पुराणार्थं द्विजोत्तमाः।

---

वैद्याभूषणी।

गौतमस्तन्मायां विज्ञाय शशाप। ततस्तेषां ज्ञानलोपः।' इति वाराहे कथाऽस्ति। अधिकमिति। निःसन्देहत्वादिति बोध्यम्। अन्यथा कृत्वा—अवज्ञाय॥

वेदवदिति। पुराणार्थो वेदवत् सर्व्वसम्मत इत्यर्थः। ननु पण्डितैः

राधामोहनी।

वेदतोऽशक्यत्वादित्येवकारसङ्गतिः। यद्वा, इतिहासपुराणविचारः श्रेयानेवेति योजना। तेन द्विजानां वेदविचारोऽप्यावश्यकः, "तदेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" ( वृ० ४।४।२२ ) इति, श्रुतेः, "श्रोतव्यः श्रुतिवाक्येभ्यः" इति श्रुतेः। वेदार्थादिति वेदार्थावधारणादित्यर्थः। यथाश्रुते वेदार्थपुराणार्थयोरेकत्वान्न्यूनाधिकभावानुपपत्तेः॥

निश्चलः निश्चितप्रामाण्यकावधारणविषयीकृततात्पर्यविषकार्थकः। स्मृति-

वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ॥
बिभेत्यल्पश्रुताद् वेदो मामयं चालयिष्यति ।
इतिहासपुराणैस्तु निश्चलोऽयं कृतः पुरा ॥
यन्न दृष्टं हि वेदेषु तद् दृष्टं स्मृतिषु द्विजाः ।
उभयोर्यन्न दृष्टं हि तत् पुराणैः प्रगीयते ॥
यो वेद चतुरो वेदान् साङ्गोपनिषदो द्विजाः ।
पुराणं नैव जानाति न च स स्याद्विचक्षणः ॥"

( प्र० खं० २।९०-९२ ) इति ।

अथ पुराणानामेवं प्रामाण्ये स्थितेऽपि तेषामपि सामस्त्येना-

---

वैद्याभूषणी ।

कृताद् वेदभाष्यात्तदर्थो ग्राह्य इति चेत्, तत्राह—बिभेतीति । अकृते भाष्ये सिद्धे, किं तेन कृत्रिमेणेति भावः ।

अथेति । असन्दिग्धार्थतया पुराणानामेव प्रामाण्ये—प्रमाकरणत्वे

राधामोहनी ।

ष्विति तासामपि वेदार्थनिर्णायकत्वात्,

"श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः ॥"

इत्याद्युक्तत्वाच्च । 'न च स स्याद्विचक्षणः' इतिहासादपि पुराणस्याऽऽधिक्यं दर्शयति, सम्यगर्थावधारणरूपत्वादिति । नानादेवताप्रतिपादकप्रायत्वात् अतिमुख्यत्वेन नानादेवताप्रतिपत्तिसञ्जकत्वादित्यर्थः । अर्थः तात्पर्यार्थः । पञ्चाङ्गम्—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥" ( म० पु० ५३।६५ )

प्रचरद्रूपत्वान्नानादेवताप्रतिपादकप्रायत्वाद् अर्वाचीनैः क्षुद्रबुद्धिभिरर्थो दुरधिगम इति तदवस्थ एव संशयः। यदुक्तं मात्स्ये—

"पञ्चाङ्गञ्च पुराणं स्यादाख्यानमितरत् स्मृतम्।
सात्त्विकेषु च कल्पेषु माहात्म्यमाधिकं हरेः॥
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः।
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च॥
सङ्कीर्णेषु सरस्वत्याः पितॄणाञ्च निगद्यते"॥

( म० पु० ५३।६५,६८,६९ ) इति।

---

वैद्याभूषणी।

इत्यर्थः। अर्वाचीनैःक्षुद्रबुद्धिभिरिति—यस्य विभूतयोऽपीदृश्यः स हरिरेव सर्वश्रेष्ठ इति तदैकार्थ्यम्,

"वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते॥"

इति हरिवंशोक्तमजानद्भिरित्यर्थः॥

राधामोहनी।

इत्युक्तविश्वसर्गादिपञ्चवर्णनात्मकम्। इतरत् पुराणभिन्नम्। आख्यानम्—आख्यानाख्यं शास्त्रम्। यद्वा, इतरद् विश्वसर्गादिपञ्चलक्षणातिरिक्तमपि प्रसङ्गादाख्यानम्। आख्यायकमिति पुराणविशेषणम्। शास्त्रस्य सात्त्विकत्वादिकं सात्त्विकदेवतातदुपासकगुणकर्मादिवर्णनाधिक्येन सात्त्विकत्वादिना परिभाषितत्वम्। कल्पेषु पुराणादिशास्त्रेषु। तद्वत्—ब्रह्मण इव। सरस्वत्या इति देवता-

अत्राऽग्नेस्तत्तदग्नौ प्रतिपाद्यस्य तत्तद्द्रव्यज्ञस्येत्यर्थः । शिवस्य चेति चकाराच्छिवायाश्च । सङ्कीर्णेषु—सत्त्वरजस्तमोमयेषु कल्पेषु बहुषु । सरस्वत्याः—नानावाण्यात्मकतदुपलक्षिताया नानादेवताया इत्यर्थः । पितॄणाम्—"कर्म्मणा पितृलोकः" इति श्रुतेस्तत्प्रापककर्म्मणामित्यर्थः ॥

तदेवं सति तत्तत्कल्पकथामयत्वेनैव मात्स्य एव प्रसिद्धानां तत्तत्पुराणानां व्यवस्था ज्ञापिता । तारतम्यन्तु कथं स्यात्, येनेतरनिर्णयः क्रियेत । सत्त्वादितारतम्येनैवेति चेत्, "सत्त्वात् सञ्जायते ज्ञानम्"(गी०१०।१७) इति "सत्त्वं यद् ब्रह्मदर्शनम्" इति न्यायात् सात्त्विकमेव पुराणादिकं परमार्थज्ञानाय प्रबलमित्याया-

---

वैद्याभूषणी ।

तदेवमिति । मात्स्य एवेति । पुराणसंख्यातद्दानफलकथनाञ्चितेऽध्याये इति बोध्यम् । तारतम्यमिति । अपकर्षोत्कर्षरूपम्, येनेतरस्योत्कृष्टस्य पुराणस्य निर्णयः स्यादित्यर्थः । सात्त्विकपुराणमेवोत्कृष्टमिति भावेन स्वयमाह—सत्त्वादिति । पृच्छति—तथापीति । परमार्थनि-

राधामोहनी ।

न्तरोपलक्षकम् । उपलक्षणत्वं विवृणोति—नानावाण्यात्मकेति वागधिष्ठातृरूपेत्यर्थः। सर्वत्र माहात्म्यपदं स्वरूपोत्कर्षपूजनादिक्रियापरम् ॥

तारतम्यं तत्तद्देवतानां न्यूनाधिक्यं कथं स्यात्—कथं ज्ञातं स्यात्, येन तारतम्यनिर्णयेन, इतरनिर्णयः—भजनादिनिर्णयः । सत्त्वादितारतम्येनैवेति इतरनिर्णयः क्रियते इत्यनेनास्याऽन्वयः । इति चेदिति तदेति शेषः । इति च न्या-

तम् । तथापि परमार्थेऽपि नानाभङ्ग्या विप्रतिपद्यमानानां समाधानाय किं स्यात् । यदि सर्व्वस्यापि वेदस्य पुराणस्य चार्थनिर्णयाय तेनैव श्रीभगवता व्यासेन ब्रह्मसूत्रं कृतम्, तदवलोकनेनैव सर्व्वोऽर्थो निर्णेय इत्युच्यते, तर्हि नाऽन्यसूत्रकारमुन्यनुगतैर्मन्येत। किञ्च, अत्यन्तगूढार्थानामल्पाक्षराणां तत्सूत्राणामन्यार्थत्वं कश्चिदाचक्षीत । ततः कतरदिवाऽत्र समाधानम् ? तदेव समाधेयम् । यद्येकतममेव पुराणलक्षणमपौरुषेयं शास्त्रं सर्व्ववेदेतिहासपुराणानामर्थसारं ब्रह्मसूत्रोपजीव्यञ्च भवद् भुवि सम्पूर्णं प्रचरद्रूपं

सर्वसंवादिनी ।

र्णयाय सात्त्विकशास्त्राङ्गीकारेऽपीत्यर्थः । नानाभङ्ग्येति । सगुणं निर्गुणं ज्ञानगुणकं जड़मित्यादिकं कुटिलयुक्तिकदम्बैर्निरूपयतामित्यर्थः । नाऽन्यसूत्रकारेति । गौतमाद्यनुसारिभिरित्यर्थः । ननु ब्रह्मसूत्रशास्त्रे स्थिते काऽपेक्षा तदन्यसूत्राणामिति चेत्, तत्राह—किञ्चाऽत्यन्तेति । पृष्टः प्राह—तदेवेति । ब्रह्मसूत्रोपजीव्यमिति । येन ब्रह्मसूत्रं स्थिरार्थं स्यादित्यर्थः ।

राधामोहनी ।

यात्—इति न्यायाच्च, तथापि सात्त्विकपुराणस्य परमार्थसाधकत्वेऽपि । नानाभङ्ग्या शास्त्रान्तरप्रदर्शितयुक्तिनिबन्धनचित्तविभ्रमेण, विप्रतिपद्यमानानां संशयविपर्ययवतां समाधानाय तत्त्वनिर्णयाय किं स्यादिति । अर्थनिर्णयाय—अर्थनिर्णये प्रामाण्यसूचनाय । न मन्येत—मुन्यन्तरोक्तयुक्त्यन्तरेण विभिन्नचित्ततया ब्रह्मसूत्रनिर्णीतार्थो न मन्येत । यदि च वेदान्तसंवादप्रबलब्रह्मसूत्रप्रदर्शितयुक्त्या मुन्यन्तरसूत्रानुगता निरसनीया इत्युच्यते, तथापि सन्देहः, इत्यत आह—किं चेति ।

स्यात् । सत्यमुक्तम् । यत एव च सर्वप्रमाणानां चक्रवर्त्तिभूत-मस्मदभिमतं श्रीमद्भागवतमेवोद्भावितं भवता ॥

यत् खलु सर्वपुराणजातमाविर्भाव्य, ब्रह्मसूत्रञ्च प्रणीया-प्यपरितुष्टेन तेन भगवता निजसूत्राणामकृत्रिमभाष्यभूतं समाधि-लब्धमाविर्भावितम् । यस्मिन्नेव सर्वशास्त्रसमन्वयो दृश्यते, स-र्ववेदार्थसूत्रलक्षणां गायत्रीमधिकृत्य प्रवर्त्तितत्वात् । तथाहि

वैद्याभूषणी ।

पृष्टस्य हृद्गतं स्फुटयति—सत्यमुक्तमित्यादिना ॥

श्रीभागवतं स्तौति—यत् खल्वित्यादि । अपरितुष्टेनेति । पुरा-णजाते ब्रह्मसूत्रे च भगवत्पारमैश्वर्य्यमाधुर्य्ययोः सन्दिग्धतया गूढतया चोक्तेस्तत्र तत्र चाऽपरितोषः, श्रीभागवते तु तयोस्तद्विलक्षणतयोक्तेस्तत्र

राधामोहनी ।

अपौरुषेयमिति परमेश्वरप्रणीतत्वेन सन्देहागोचरमिति भावः । उद्भावितम् स्मारितम् ॥

अकृत्रिमभाष्यभूतमिति । अकृत्रिमत्वेन निश्चितप्रामाण्यकं व्याख्यानसदृशमि-त्यर्थः । ब्रह्मसूत्रस्य वेदव्यासकृतत्वेनापौरुषेयश्रीमद्भागवतस्य तद्व्याख्यानरूपत्वा-सम्भवात् सदृशार्थकभूतनिर्देशः । सर्वशास्त्रसमन्वयः सर्वशास्त्रतात्पर्यविषयीभूतोऽ-र्थः—सर्ववेदानां तात्पर्यविषयीभूतोऽर्थः परमेश्वरः "सर्वे वेदा यत्पदमामनन्ति" ( क० २।१५ ) इति श्रुतेः । तस्य सूत्रलक्षणां सङ्क्षेपेण बोधिकां गायत्रीं गायत्रीपदघटकधीमहीतिपदसूचिततदर्थप्रकाशनपद्यम् अधिकृत्य स्वाभिधेयमुख्या-र्थसङ्ग्राहकतया सूचयित्वा । साक्षाल्लिखनानर्हत्वादिति स्त्रीशूद्राद्यधिकारश्रव-णयोरयग्रन्थादौ गायत्रीस्वरूपलिखनस्याऽयोग्यत्वादित्यर्थः । इदमुपलक्षणं गा-

तत्स्वरूपं मात्स्ये—

"यत्राऽधिकृत्य गायत्रीं वर्ण्यते धर्म्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रौष्ठपद्यां पौर्णमास्यां स याति परमां गतिम् ।
अष्टादश सहस्राणि पुराणं तत् प्रकीर्त्तितम् ॥"
(म० पु० ५३।२०,२२) इति ।

अत्र गायत्रीशब्देन तत्सूचकतदव्यभिचारिधीमहिपदसम्बलिततदर्थ एवेष्यते । सर्वेषां मन्त्राणामादिरूपायास्तस्याः साक्षात्कथनानर्हत्वात् । तदर्थता च,

"जन्माद्यस्य यतः" "तेने ब्रह्म हृदा"(भा० १।१।१ ) इति ।

सर्वलोकाश्रयत्वबुद्धिवृत्तिप्रेरकत्वादिसाम्यात् । धर्म्मविस्तर इत्यत्र धर्म्मशब्दः परमधर्म्मपरः,

---

वैद्याभूषणी ।

परितोष इति बोध्यम् । तदर्थता—गायत्र्यर्थता । स च भगवद्ध्याना

राधामोहनी ।

यद्वा अन्यार्थपरताभ्रमनिरासायापि तदर्थप्रकाशनपद्यारम्भ इति । अष्टादश सहस्राणि श्लोकाः । तत्—भागवतम् । "तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय ।" ( श्वे० ३।८ ) इति श्रुत्या परब्रह्मणो भगवतः साक्षात्कारस्यैव मोक्षहेतुतया समीप्सितम्, तत्कारणार्थं निदिध्यासनपदमिति वाच्यम्; ध्यानमेव मुख्यं कारणम्, तदेव प्रतिज्ञातं 'धीमहि' इति । तत्फलं

"धर्म्मः प्रोज्झितकैतवोऽत्र परमः" ( भा० १।१।२ )

इत्यत्रैव प्रतिपादितत्वात् । स च भगवद्ध्यानादिलक्षण एवेति पुरस्ताद् व्यक्तीभविष्यति ॥

एवं स्कान्दे प्रभासखण्डे च—

"यत्राऽधिकृत्य गायत्रीम्" ( प्र० खं० २।३९ ) इत्यादि ।

सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ।

तद्वृत्तान्तोद्भवं लोके तच्च भागवतं स्मृतम् ॥ (प्र० खं० २।४०)

लिखित्वा तच्च" (प्र० ख० २।४१) इत्यादि ।

"अष्टादश सहस्राणि पुराणं तत्प्रकीर्त्तितम् ॥"(प्र०ख० २।४२) इति ।

पुराणान्तरञ्च—

"ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः ।

हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥

---

वैद्याभूषणी ।

दिलक्षण इति विशुद्धभक्तिमार्गबोधक इत्यर्थः ॥

'ग्रन्थः' इत्यादौ हयग्रीवादिशब्दयोर्भ्रान्तिं निराकुर्व्वन् व्याचष्टे—

राधामोहनी ।

च ध्यानकारणश्रवणमननयोरनेन पुराणेन सम्पत्तिरिति सूचनेन ग्रन्थाध्ययने प्रवर्तनमिति भावः । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० २।४।५) इति श्रुतेः । साम्यादिति । तथा च गायत्रीशब्दो गौण्या गायत्रीसमानार्थकपद्यपर इति ॥

गायत्रीमित्यादीति । इत्याद्यनन्तरमित्यर्थः । तद्वृत्तान्तस्योद्भवः प्रकटनं य-

गायत्र्या च समारम्भस्तद्वै भागवतं विदुः" । इति ।

अत्र "हयग्रीवब्रह्मविद्या" इति वृत्रवधसाहचर्य्येण नारायणवर्म्मैवोच्यते । हयग्रीवशब्देनाऽत्राऽश्वशिरा दधीचिरेवोच्यते । तेनैव च प्रवर्त्तिता नारायणवर्म्माख्या ब्रह्मविद्या । तस्या अश्वशिरस्त्वञ्च षष्ठे, "यद्वा अश्वशिरो नाम" (भा० ६।९।५२) इत्यत्र प्रसिद्धं नारायणवर्म्मणो ब्रह्मविद्यात्वञ्च—

"एतत् श्रुत्वा तथोवाच दध्यङ्ङाथर्व्वणस्तयोः ।
प्रवर्ग्यं ब्रह्मविद्याञ्च सत्कृतोऽसत्यशङ्कितः ॥"
( श्रीधरी टी० ६।९।५२ )

इति टीकोत्थापितवचनेन चेति । श्रीमद्भागवतस्य भगवत्प्रियत्वेन भागवताभीष्टत्वेन च परमसात्त्विकत्वम् । यथा पाद्मे अम्बरीषं प्रति गौतमप्रश्नः—

---

वैद्याभूषणी ।

अत्र हयग्रीवेत्यादिना ।

एतत् श्रुत्वेति । दध्यङ्—दधीचिः । प्रवर्ग्यमिति—प्राणविद्याम् । ननु पाद्मादीनि सात्त्विकानि पञ्च सन्ति, तैरस्तु विचार इति चेत्, तत्राह—श्रीमदिति । एतस्य परमसात्त्विकत्वे पाद्मादिवचनान्युदाहरति—

राधामोहनी ।

स्मात्तत् । हेमसिंहसमन्वितं हेमसिंहासनमारूढम्, पुराणराजत्वादिति । तस्या विद्याया प्रसिद्धमिति । तथा च हयग्रीवेण प्रवर्त्तितत्वाद्विद्याया अपि हयग्रीवत्वेन प्रसिद्धिरिति भावः । ब्रह्मविद्यात्वम्—च ब्रह्मविद्यात्वेन प्रसिद्धिश्च, सारस्वतकल्पा-

"पुराणं त्वं भागवतं पठसे पुरतो हरेः ।
चरितं दैत्यराजस्य प्रह्लादस्य च भूपते ! ॥"

तत्रैव वञ्जुलीमाहात्म्ये तस्य तस्मिन्नुपदेशः—

"रात्रौ तु जागरः कार्य्यः श्रोतव्या वैष्णवी कथा ॥
गीता नामसहस्रञ्च पुराणं शुकभाषितम् ।
पठितव्यं प्रयत्नेन हरेः सन्तोषकारणम् ॥"

तत्रैवाऽन्यत्र—

"अम्बरीष ! शुकप्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम् ॥"

स्कान्दे प्रह्लादसंहितायां द्वारकामाहात्म्ये—

"श्रीमद्भागवतं भक्त्या पठते हरिसन्निधौ ।
जागरे तत्पदं याति कुलवृन्दसमन्वितः" ॥ २० ॥

---

वैद्याभूषणी ।

पुराणं त्वमित्यादिना । कुलवृन्देति—तत्कर्त्तृकश्रवणमहिम्ना तत्कुलस्य च हरिपदलाभ इत्यर्थः ॥

राधामोहनी ।

भिधेयाभिधातृत्वेनास्यापि सारस्वतकल्पत्वं सूचितम् । तच्च गायत्र्याख्यसरस्वतीमुपक्रम्याऽऽरब्धत्वेन व्यक्तमग्रे इति । एतदिति । अश्विभ्यामुक्तं प्रागुक्तवचनमित्यर्थः । टीकोत्थापितवचनेन चेति । चकाराद्भागवते तस्या विद्यात्वेन ब्रह्मत्वेन च कथनलाभः । केचित्तु हयग्रीवः—हयग्रीवावतारः, ब्रह्मविद्या—ब्रह्मतत्त्वं चेत्याहुः । हरेः सन्तोषकारणमिति । अनेन भगवत्प्रियत्वमुक्तम् । भवक्षयमिति तत्पदं यातीति च भागवतानां भगवद्भक्तानामभीष्टदत्वसूचकम् ॥

गारुडे च,—

"पूर्णः सोऽयमतिशयः ।

अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः ॥

गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः ।

पुराणानां सामरूपः साक्षाद्भगवतोदितः ॥

द्वादशस्कन्धयुक्तोऽयं शतविच्छेदसंयुतः ।

ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः ॥" इति ।

ब्रह्मसूत्राणामर्थस्तेषामकृत्रिमभाष्यभूत इत्यर्थः । पूर्वं सूक्ष्मत्वेन मनस्याविर्भूतम्, तदेव संक्षिप्य सूत्रत्वेन पुनः प्रकटितम्, पश्चाद्विस्तीर्णत्वेन साक्षात् श्रीभागवतमिति । तस्मात्तद्भाष्यभूते स्वतः सिद्धे तस्मिन् सत्यर्वाचीनमन्यदन्येषां स्व-

---

वैद्याभूषणी ।

गारुडवचनैश्च परमसात्त्विकत्वं व्यञ्जयन् ब्रह्मसूत्राद्यर्थनिर्णायकत्वं गुणमाह—अर्थोऽयमिति । गारुडवाक्यपदानि व्याचष्टे—ब्रह्मसूत्राणामित्यादिना । तस्मात्तद्भाष्येत्यादि । अन्यद्वैष्णवाचार्य्यरचितमाधुनिकं भाष्यं तदनुगतं श्रीभागवताविरुद्धमेवाऽऽदर्त्तव्यम्, तद्विरुद्धं शङ्करभट्ट-

राधामोहनी ।

अर्थः—अर्थयति बोधयतीति व्युत्पत्त्याऽर्थबोधकः । विवृणोतीदम्—तेषामकृत्रिमभाष्यभूत इति । सूक्ष्मत्वेन सकलवेदतात्पर्यविषयपरमार्थसंग्राहकत्वेन गूढतया स्थितत्वेन च यत् पद्यं मनस्याविर्भूतं गायत्रीसमानार्थकं तदेवेत्यर्थः । सूत्रत्वेन उपक्रमरूपत्वेन, विस्तीर्णत्वेन सदृष्टान्तयुक्त्युपन्यासेतिहासादिना गायत्र्यर्थतत्त्वा-

स्वकपोलकल्पितं तदनुगतमेवादरणीयमिति गम्यते । भारतार्थविनिर्णयः—

"निर्णयः सर्वशास्त्राणां भारतं परिकीर्त्तितम् ।
भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ।
देवैर्ब्रह्मादिभिः सर्वैर्ऋषिभिश्च समन्वितैः ॥
व्यासस्यैवाऽऽज्ञया तत्र त्वतिरिच्यत भारतम् ।
महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ॥"

इत्याद्युक्तलक्षणस्य भारतस्याऽर्थविनिर्णयो यत्र सः । श्रीभगवत्येव तात्पर्यं हि तस्याऽपि । तदुक्तं मोक्षधर्म्मे नारायणीये श्रीवेदव्यासं प्रति जनमेजयेन—

---

वैद्याभूषणी ।

भास्करादिरचितं तु हेयमित्यर्थः । भारतार्थेति पदं व्याकुर्व्वन् भारतवाक्येनैव भारतस्वरूपं दर्शयति—निर्णयः सर्वेति । भारतं किन्तात्पर्य्यकमित्याह—श्रीभगवत्येवेति । तस्य भारतस्यापीत्यर्थः । भारतस्य भगवत्तात्पर्य्यकत्वे नारायणीयवाक्यमुदाहरति—इदं शतेत्यादि ॥

राधामोहनी ।

त्पर्यविस्तारकत्वेन । तस्मिन्—भागवते । तदनुगतम्—भागवतार्थसंवादि, न तु तद्विपरीतार्थकम् । विनिर्णयः विशेषेण निर्णायकः । यद्वा 'विशिष्य निर्णयो यत्र तद्भागवतम्' इति यत्तत्पदपूरणेनार्थो ज्ञेयः । अत्यरिच्यतेति । सकलवेदार्थानां सहेतुकं विवृत्याविर्भावकत्वात् । तदेवाह—महत्त्वादिति । षष्टिलक्षश्लोकात्मकत्वेन सकलवेदार्थसंग्राहकत्वात् । भारवत्त्वात्—परतत्त्वस्मारकपरमभागवतभरतवंशप्रसङ्गात् ।

"इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमथ्य मतिमन्थेन ज्ञानोदधिमनुत्तमम् ॥
नवनीतं यथा दध्नो मलयाच्चन्दनं यथा ।
आरण्यं सर्व्ववेदेभ्य ओषधिभ्योऽमृतं यथा ॥
समुद्धृतमिदं ब्रह्मन् ! कथामृतमिदं तथा ।
तपोनिधे ! त्वयोक्तं हि नारायणकथाश्रयम् ॥"

( म० भा० शा० ३५२ । १०–१३ ) इति ॥

तथा च तृतीये—

"मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः ।

---

वैद्याभूषणी ।

ननु श्रीभागवतस्य भारतार्थनिर्णायकत्वं कथं प्रतीतमिति चेत्तत्राह—तथा तृतीय इति । मुनिरिति—मैत्रेयं प्रति विदुरोक्तिः । ते मैत्रेयस्य

राधामोहनी ।

भारताख्यानविस्तरात्—भारताख्यानविस्तारमालोच्य तत्र स्थितं ज्ञानोदधिमामथ्य तस्मादिदं कथामृतं समुद्धृतमित्यन्वयः । कथाया अमृतत्वे हेतुः—नारायणकथाश्रयमिति । एतेन यथा नारायणस्य भगवदपरनामकस्य स्वरूपगुणलीलावर्णनस्य सर्वशास्त्रसारत्वात्तदाख्यानाश्रयं भारतमुत्तमम्, तथा भगवद्गुणवर्णनप्रधानत्वेन श्रीभागवतमुत्तममिति दर्शितम् । भारतस्याऽन्यवर्णनसंवलितस्य नारायणीयाख्यानांशस्य उद्धृतसारत्वकथनात्ततोऽधिकभगवत्स्वरूपगुणादिवर्णनमात्रात्मकस्य भागवतस्य भारतादाधिक्यं च सूचितम् ॥

तदेवाह—तथा चेति । कृष्णो वेदव्यासः, मुनिः-मननेन सर्वदर्शी । भगवद्गुणानाम्-भगवद्गुणान्, विवक्षुः-नारायणोपाख्यानेन वक्तुमिच्छुः सन् भारतमाह ।

यस्मिन्नृणां ग्राम्यकथानुवादैर्मतिर्गृहीता नु हरेः कथायाम् ॥"

(भा० ३।५।१२) इति।

---

वैष्णवतोषणी।

गुरुपुत्रत्वात् सखा कृष्णो व्यासः। ग्राम्या गृहिधर्म्मकर्त्तव्यतादिलक्षणा व्यावहारिकी मूषिकविडालगृध्रगोमायुदृष्टान्तोपेता च कथा। तत्तत्स्वार्थकौतुककथाश्रवणाय भारतसदसि समागतानां नृणां श्रीगीतादिश्रवणेन हरौ मतिर्गृहीता स्यादिति तत्कथानुवाद एव, वस्तुतो भगवत्परमेव भारतमिति श्रीभागवतेन निर्णीतमित्यर्थः।

राधामोहनी।

यस्मिन् भारते, ग्राम्यसुखानुवादैः—ग्राम्यसुखान्यनूद्य तत्प्रसङ्गेन हरेः कथायां मतिर्गृहीता नीता, हरिकथायामेव तात्पर्यं दर्शितम्, ग्राम्यसुखानुवादस्तु प्रथमतः कामिनामपि प्रवृत्त्यर्थम्। ततश्च तत्रैव ग्राम्यसुखनिन्दया भगवत्तत्त्वमावेदितं श्रेयसे। एवं च भारततात्पर्यविषयस्य भगवत एव सामस्त्येन वर्णनमयभागवतस्य भारतादुत्तमत्वं दर्शितम्। एवं 'भगवत इदं भागवम्' इति व्युत्पत्तिसिद्धनामापि तदुत्कर्षं दर्शयति। यद्यपि ब्रह्मत्वपरमात्मत्वाभ्यामपि परतत्त्वं भागवते दर्शितम्, तथापि भगवत्त्वेन ज्ञानस्य संसारनिवृत्तये प्राधान्यात्तदाधिक्येन वर्णनात् "अधिकेन व्यपदेशा भवन्ति" इति न्यायेन भागवताख्यत्वमस्य ग्रन्थस्येति। भगवत्त्वेनोपासनायाः प्राधान्यम्। भगवद्गीतायां भगवद्वाक्यं यथा—

"मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥" (गी० १२।२) इति।

तथा—

"तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्॥" (गी० १२।७) इति।

तस्मात् गायत्रीभाष्यरूपोऽसौ । तथैव हि विष्णुधर्म्मोत्तरादौ तद्व्याख्याने भगवानेव विस्तरेण प्रतिपादितः । अत्र "जन्माद्यस्य" इत्यस्य व्याख्यानञ्च तथा दर्शयिष्यते । वेदार्थपरिबृंहितः—वेदार्थस्य परिबृंहणं यस्मात् । तच्चोक्तम्—"इतिहासपुराणाभ्याम्" इत्यादि । पुराणानां सामरूपः—वेदेषु सामवत् स तेषु श्रेष्ठ इत्यर्थः । अत एव स्कान्दे—

---

वैद्याभूषणी ।

सामवेदस्य श्रैष्ठ्ये स्कान्दवाक्यम्—शतशोऽथेत्यादि । प्रकटार्थम् ।

राधामोहनी ।

गायत्रीभाष्यरूपोऽसाविति । एवं च भगवत्परैर्द्विजैरवश्यं गायत्री समुपास्येति । स्त्रीशूद्रब्रह्मबन्धूनां पौराणिकमन्त्रेणोपासना कार्या । न च

"नानातन्त्रविधानेन कलावपि तथा शृणु" । (भा० ११।५।३१ )

इत्येकादशोक्तजायन्तेयवचनात् ,

"य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ।
विधिनोपचरेद् देवं तन्त्रोक्तेन च केशवम् ॥" ( भा० ११।३।४७ )

इत्येकादशीयभगवद्वचनात् ,

"आगमोक्तविधानेन कलौ देवान् यजेत्सुधीः ।
न हि देवाः प्रसीदन्ति कलौ चाऽन्यविधानतः ॥"

इति तन्त्रसारधृतवचनाच्च तान्त्रिकोपासनैव कार्येति वाच्यम् , तत्तद्वचनानां कलौ प्राधान्येन तान्त्रिकोपासनायाः कर्त्तव्यतापरत्वात् ,

"वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगतः ।"

"शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसङ्ग्रहैः ।
न यस्य तिष्ठते गेहे शास्त्रं भागवतं कलौ ॥
कथं स वैष्णवो ज्ञेयः, शास्त्रं भागवतं कलौ ।
गृहे न तिष्ठते यस्य स विप्रः श्वपचाधमः ॥
यत्र यत्र भवेद् विप्र ! शास्त्रं भागवतं कलौ ।
तत्र तत्र हरिर्याति त्रिदशैः सह नारद ! ॥
यः पठेत् प्रयतो नित्यं श्लोकं भागवतं मुने ! ।
अष्टादशपुराणानां फलं प्राप्नोति मानवः ॥" इति ।

शतविच्छेदसंयुतः—पञ्चत्रिंशदधिकशतत्रयाध्यायविशिष्ट इत्यर्थः । स्पष्टार्थमन्यत् । तदेवं परमार्थं विवित्सुभिः श्रीभागवतमेव साम्प्रतं विचारणीयमिति स्थितम् ॥

---

वैद्याभूषणा ।

तदेवमिति । उक्तगुणगणे सिद्धे सतीत्यर्थः ॥

राधामोहनी ।

इति तन्त्रसारधृतवचनादिना वैदिकतान्त्रिकभजनसमुच्चयज्ञापनात्,

"वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ।" (भा० ११।११।३७)

इत्येकादशीयभगवद्वचनाच्च । न च द्वापरयुगोपासनायाम् "यजन्ति वेदतन्त्राभ्याम्" इत्युक्त्या ।

"नानातन्त्रविधानेन कलावपि तथा शृणु ।" ( भा० ११।५।३१ )

इत्यादिवचनात् द्वापरयुगोपासनायां वैदिकतान्त्रिकसमुच्चयः, न तु कलाविति वाच्यम्; द्वापरे वेदस्य प्राधान्यम्, कलौ च तन्त्रस्य प्राधान्यमिति समुच्चयस्तु युगद्वय एवेति विशेषात् । अन्यथा नानाश्रुतिस्मृतिपुराणादिविरोधापत्तेरिति ।

( हेमाद्रेर्व्रतखण्डे—

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्म्मश्रेयसि मूढानां श्रेय एव भवेदिह ॥
इति भारतमाख्यानं कृपया मुनिना कृतम् ।"

इति वाक्यं श्रीभागवतीयत्वेनोत्थाप्य भारतस्य वेदार्थ-तुल्यत्वेन निर्णयः कृत इति तन्मतानुसारेण त्वेवं व्याख्येयम् — भारतार्थस्य विनिर्णयः— वेदार्थतुल्यत्वेन विशिष्य निर्णयो य-त्रेति । यस्मादेवं भगवत्परस्तस्मादेव "यत्राऽधिकृत्य गायत्रीम्" इति कृतलक्षणश्रीमद्भागवतनामा ग्रन्थः श्रीभगवत्पराया गाय-त्र्या भाष्यरूपोऽसौ ।

तदुक्तम्—'यत्राऽधिकृत्य गायत्रीम्' इत्यादि । तथैव हि अग्निपुराणे तस्य व्याख्याने विस्तरेण प्रतिपादितः ।

तत्र तदीयव्याख्यादिवर्णनम् यथा—

"तज्ज्योतिः परम् ब्रह्म भर्गस्तेजो यतः स्मृतः ।"

राधामोहनी ।

दिग्दर्शनम्–संक्षिप्तार्थवचनम्, दिशो दर्शनं यत इति व्युत्पत्तेः; दिशं दर्शयतीति वा । तद् ज्योतिः—चेतनम्, इदम् भर्गशब्दार्थः । तस्य भर्गशब्दार्थत्वे हेतुमाह– भर्गः—भर्गशब्दः, यतस्तेजः तेजोवाचकः स्मृतः । तेजः—स्वपरप्रकाशकत्वाच्चै-तन्यम् । चैतन्यतदाश्रययोरभेदाच्चेतन एव तात्पर्याप्तेः । किं तच्चेतनमित्याका-.

( ) एतद्बन्धनीमध्यगतः पाठः श्रीराधामोहनभट्टाचार्यैर्विवृतः । कुत्र-चिदादर्शेऽविद्यमानोऽपि बहुष्वादर्शेषु संदर्शनाद् नाऽस्माभिरुपेक्षितः ।

इत्यारभ्य पुनराह—

"तज्ज्योतिर्भगवान् विष्णुर्जगज्जन्मादिकारणम् ।
शिवं केचित्पठन्ति स्म शक्तिरूपं वदन्ति च ॥
केचित्सूर्यं केचिदग्निं देवतान्यग्निहोत्रिणः ।
अग्न्यादिरूपी विष्णुर्हि वेदादौ ब्रह्म गीयते ॥" इति ।

---

राधामोहनी ।

इक्षायां तात्पर्यं निर्दिशति—परमं ब्रह्मेति ।

"प्रणवव्याहृतिभ्यां च गायत्र्या त्रितयेन च ।
उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः ॥"

इति योगियाज्ञवल्क्यवचनमपि तथा बोधयति । पाद्मे च नारदं प्रति ब्रह्मवाक्यम्—

"कृष्णाख्यन्तु परं ब्रह्म भुवि जातं न संशयः ।" इति ।

जातम्—आविर्भूतम् । एवं च भर्गशब्देन कृष्ण एव निर्द्धारितः । तदेव स्फुटयति—"तज्ज्योतिर्भगवान् विष्णुः" इति । स्वयं भगवत्त्वस्य कृष्णे निरुक्तत्वादत्र भगवच्छब्दसहचरितत्वेन विष्णुशब्दः श्रीकृष्णपरः । "जगज्जन्मादिकारणम्" इत्यभेदार्थकषष्ठ्यन्तसवितृपदलभ्यम्, सवितुः प्रसवितुरित्यर्थात् । "देवस्य" इति विशेषणेन क्रीडायुक्तत्वं लभ्यते । क्रीडा च शरीरं विना नेति शरीरित्वं भगवत्त्वं च लब्धम् । तच्च शरीरं स्वाभाविकमिति सात्वतैर्व्यवस्थापितम् । "धियो यो नः प्रचोदयात्" इत्यनेन बुद्धिवृत्तिप्रवर्तकत्वलक्षणपरमात्मत्वं ब्रह्मणे दर्शितमिति ब्रह्मपरमात्मभगवदाख्यानकं वस्तु गायत्रीप्रतिपाद्यम् । यद्वा, "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" ( तै० २।६।१ ) इति श्रुत्या जगत्स्रष्टुरेव जगदन्तर्वर्तितया बुद्धिवृत्तिप्रवर्तकत्वात् "धियो यो नः प्रचोदयात्" इत्यनेन जगत्कारणत्वमपि दर्शितम् । "देवस्य सवितुः" इति सूर्यपरं षष्ठ्या अन्तर्गतत्वरूपसम्बन्धो भर्गपदार्थान्वयी

अत्र 'जन्माद्यस्य' इत्यस्य व्याख्यानञ्च तथा दर्शयिष्यते। "कस्मै येन विभाषितोऽयम्" इत्युपसंहारवाक्ये च "तच्छुद्धम्" इत्यादि समानमेवाग्निपुराणे तद्व्याख्यानम्—

"नित्यं शुद्धं परं ब्रह्म नित्यभर्गमधीश्वरम्।
अहं ज्योतिः परं ब्रह्म ध्यायेम हि विमुक्तये॥" इति।

---

राधामोहनी।

लभ्यत इति। "शिवं केचित्" इत्यादिकमपि विष्णुपरमेवेत्याह—"अग्न्यादिरूपी विष्णुर्हि" इति। अत्र—गायत्रीव्याख्याने। तथा—विष्णुपरतया। तच्छुद्धमित्यादिसमानमिति।

"कस्मै येन विभाषितोऽयमतुलो ज्ञानप्रदीपः पुरा
तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा।
योगीन्द्राय तदात्मनाऽथ भगवद्रा‌ताय कारुण्यत-
स्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि॥"

( भा० १२।१३।१९ )

इति द्वादशस्कन्धशेषीयतच्छुद्धमित्यादिसमानार्थकमित्यर्थः। अग्निपुराणीयतद्व्याख्यानं च दर्शयति—"नित्यम्" इत्यादि। अत्र पद्यटीका—"कस्मै—ब्रह्मणे, अयम्—श्रीभागवतरूपः, पुरा—कल्पादौ, तद्रूपेण—ब्रह्मरूपेण, तद्रूपिणा—नारदरूपिणा, योगीन्द्राय—शुकाय, तदात्मना—शुकरूपेण, तत्—परं सत्यं श्रीनारायणाख्यं धीमहीति—धीमहीति गायत्र्यैव यथोपक्रममुपसंहरन् गायत्र्याख्यब्रह्मविधेयमिति दर्शयतीति"। शुद्धम्—प्रकृत्यतीतम्, विमलम्—रागादिरहितम्, विशोकम्—दुःखरहितम्, अमृतम्—नित्यम्। अग्निपुराणवचने गायत्रीजपे तदर्थध्यानपूर्वकत्वं मन्त्रलिङ्गेनाऽवगतमिति दर्शयन् ध्यानाकारमाह—भर्गं धीमहि ध्यायेमहीति मन्त्रे योजना।

तत्राऽहं ब्रह्मेति—"नादेवो देवमर्च्चयेत्" इति न्यायेन योग्यत्वाय स्वस्य तादृक्त्वभावना दर्शिता । ध्यायमेति—अहं तावद् ध्यायेयम्, सर्वे च वयं ध्यायेमेत्यर्थः । तदेतन्मते तु मन्त्रेऽपि भर्गशब्दोऽयमदन्त एव स्यात् । "सुपां सुलुक्" इत्यादिना छान्दससूत्रेण तु द्वितीयैकवचनस्य 'अमः' 'सु' भावो ज्ञेयः ।

---

राधामोहनी ।

तत्र भर्गशब्दप्रतिपाद्यतावच्छेदकरूपेण ध्यानपर्यवसानं दर्शयति—नित्यम्-अविनाशि, शुद्धम्-प्रकृतेः परम्, परम्-निरतिशयम्, नित्यम्-सर्वदा समम्, अधीश्वरम्-सर्वेश्वरं ब्रह्म ध्यायेम । अधीश्वरं ब्रह्मेति भर्गशब्देन, शुद्धमित्यादि वरेण्यशब्देन बोध्यत इति वा । आत्मनः स्वरूपमाह—अहं ज्योतिरिति । देहात्मताव्यावर्तनाय यज्ज्योतिः—चेतनं परं ब्रह्मेति । अत्र प्रमाणम्—"तत्त्वमसि श्वेतकेतो" (छा० ६।८।७) अहं ब्रह्माऽस्मि" (बृ० १।४।१०) इत्यादिश्रुतिः । इदन्तु ब्रह्माभेदेन स्वात्मचिन्तनं मुमुक्षुपक्षे, अत एव 'विमुक्तये' इति वचने दर्शितम् । "नाऽदेवो देवमर्च्चयेत्" इति न्यायेन 'तत्त्वमसि' आदिश्रुतितात्पर्यावधारणेन 'नादेव' इत्यत्र देवपदं स्वाभीष्टदेवस्वरूपत्वेन स्वात्मभावनारहित इत्यर्थः । शुद्धभक्तानां तु 'भगवद्दासोऽस्मि' इत्यादिचिन्तनम्, "तत्त्वमसि" आदिश्रुतीनां तथैव तात्पर्यकल्पनादिति । योग्यत्वाय=ध्यानयोग्यत्वाय । 'ध्यायेम' इत्यत्र बहुत्वमविवक्षितम् । बहुवचनप्रयोगोऽपि छान्दस इति द्योतयन्नाह—अहं ध्यायेयमिति । इदं च वयं ध्यायेम इत्यर्थविवरणम् । ननु भर्गपदस्य धीमहीति क्रियाकर्मतया भर्गमित्येव भवितुमर्हति । न च नपुंसकसान्तभर्गःशब्दप्रयोगोऽयमिति वाच्यम्, अग्निपुराणीयवचने भर्गमधीश्वरमिति निर्देशासङ्गतेरित्यत आह—एतन्मते त्विति । 'तु शब्देन सान्तभर्गशब्दप्रयोगो मतान्तरे बोध्यः ।

"ॐ नमस्ते" इत्यादिगद्येष्विति ।

यत्तु द्वादशे—"ॐ नमस्ते" इत्यादिगद्येषु तदर्थत्वेन सूर्यः स्तुतः। तत्परमात्मदृष्टयैव, न तु स्वातन्त्र्येणेत्यदोषः।

यथैवाग्रे श्रीशौनकवाक्यम्—

"ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः।"

( भा० १२।११।१८ ) इति।

राधामोहनी।

"ॐ नमस्ते भगवते आदित्यायाऽखिलजगतामात्मस्वरूपेण कालस्वरूपेण च चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भगवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति" (भा० १२।६।६७) इत्यादिगद्येष्वित्यर्थः। अत्र "ॐनमो भगवते" इत्यादिपाठः क्वचित्। तदर्थत्वेन—गायत्रीप्रतिपादितार्थत्वेन तथाहि भगवत्त्वाखिलात्मकत्वाकाशवत् सर्वगतत्वलक्षणब्रह्मत्वकालाख्यशक्तित्वादिना एषु गद्येषु सूर्यस्य प्रतिपादनात् गायत्रीप्रतिपादितः सूर्य एवेति विरोधः 'सवितुः' इत्यत्र षष्ठ्या अभेदार्थविवक्षणाच्च। गद्ये 'अपामादानविसर्गाभ्याम्' इत्यादिना सूर्यस्य वृष्टिद्वारा लोकपालत्वमुक्तम्। विरोधं परिहरति—तत्परमात्मदृष्ट्यैवेति। तत् सूर्यस्तवनम्, परमात्मदृष्ट्या—अन्तर्यामिभगवदैक्यबुद्ध्या, सूर्यस्य भगवदधिष्ठानविशेषत्वेनाऽधिष्ठात्र्यधिष्ठानाभेदबुद्ध्या च वैराजस्य तदन्तर्यामिभगवदैक्यबुद्ध्या तदुपासनमुक्तं द्वितीयस्कन्धे। तथा च सूर्यस्य भगवदावेशावतारताभिप्रायेण तथोक्तमिति भावः। एतदेव स्पष्टयति—"व्यूहं सूर्यात्मनो हरेः" इति। व्यूहम्=अवतारम्, सूर्यात्मनः सूर्य आत्मा अधिष्ठानत्वेन स्वरूपो यस्य सः सूर्यात्मा, तस्य। अन्यथा "भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः" (तै०२।८।१) इत्यादिश्रुतिविरोधः स्यादिति भावः। एवं च जगत्कारणस्वरूपं सवितृत्वमुपचर्य सूर्येऽपि सवितृपदप्रयोग इति। अत एव गद्येष्वपि 'परमात्मना' इत्यनुक्त्वा

न चाऽस्य भर्गस्य सूर्यमात्राधिष्ठानत्वम्। मन्त्रे वरेण्यशब्देनाऽत्र च ग्रन्थे परशब्देन परमैश्वर्यपर्यन्ताया दर्शितत्वात्। तदेवमग्निपुराणेऽप्युक्तम्—

ध्यानेन पुरुषोऽयञ्च द्रष्टव्यः सूर्यमण्डले ।

सत्यं सदाशिवं ब्रह्म तद्विष्णोः परमं पदम् ॥"

( अग्नि० २१६।१६ ) इति ।

---

राधामोहनी ।

'परमात्मस्वरूपेण' इत्युक्तम् । परमात्मस्वरूपत्वेनेति तदर्थः । एवमन्यत्रापि क्वचित् सूर्यस्य परमात्मत्वमुक्तमेतदभिप्रायेणैवेति। अत्र च—श्रीभागवताग्निपुराणादौ दर्शितत्वादिति । तथा च यथाऽन्तर्यागादौ हृत्पद्मे, बहिःपूजादौ श्रीवृन्दावनादौ भगवद्रूपध्यानं विधेयतयोक्तम्, तथा गायत्रीजपादौ सूर्यमण्डले तद्ध्यानम्। अत एव सन्ध्यायामपि गायत्रीजपमन्त्रजपयोरपि सूर्यमण्डले भगवद्ध्यानमुक्तम्, अन्यदा तु

"सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।

भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥" (भा० ११।२।४५)

इत्यादि कथितम् । यत्र यदा यद्भावनया भगवदुपासनमुक्तम्, तत्र तथैव कार्यम् । अन्यथा

"श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते ।

आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णवः ॥"

इत्याद्युक्तदोषप्रसङ्गात् ।

तदेवमिति । सूर्यमण्डले यद्ध्यानम्—तत्, एवम्—विधेयमुपासनरूपम् । 'ध्यानेन' इति 'द्रष्टव्यः' इति द्वाभ्यां पदाभ्यां ध्यानात्मकदर्शनं कार्यमिति विधेयता लभ्यते । पुरुषः—अन्तर्यामी । ध्यानमाह—सत्यमिति । सदाशिवम्—सत्कल्याणदम्, शान्तं च, पदम्—स्वरूपम्, इदं च यथाश्रुतं व्याख्यातम् । ग्रन्थका-

त्रिलोकीजनानामुपासनार्थं प्रलयविनाशिनि सूर्य्यमण्डले चान्तर्यामितया प्रादुर्भूतोऽयं पुरुषो ध्यानेन द्रष्टव्यः—उपासितव्यः। यत्तु विष्णोस्तस्य महावैकुण्ठरूपं परं पदम्, तदेव सत्यम्—कालत्रयाव्यभिचारि, सदाशिवम्—उपद्रवशून्यम्,यतो ब्रह्मस्वरूपमित्यर्थः। तदेतद्गायत्रीं प्रोच्य पुराणलक्षणप्रकरणे

राधामोहनी।

रस्तु—पूर्वार्धं प्रकृताभिप्रायकमिति तस्य तात्पर्यमुपसंहरति—त्रिलोकीजनानामिति। प्रलयविनाशिनि इत्युक्त्वा मण्डलात्मकस्य सूर्यस्य जगत्कारणत्वादिलक्षणगायत्र्यर्थताविरहेण न सूर्योपासने तात्पर्यम्, किन्तु तदन्तर्यामिपुरुषस्योपासनमिति दर्शितम्। वचनद्वितीयार्धमन्यतात्पर्यकमिति तद्व्याख्यानमाह—यत्त्विति पूरणेन। तथा च विष्णोर्यन्महावैकुण्ठाख्यं परमम्–सर्वोत्कृष्टम्, पदम्–स्थानम्, तत्—तदेव। सूर्यमण्डलात्मकाधिष्ठानस्याऽनित्यत्वं मनसि विचार्य भगवतः 'किमधिष्ठानं नित्यम्?' इति प्रष्टुर्जिज्ञासायां यद्विशेषाभिधानम्, तद्विशेषस्यैव नित्यत्वे वक्तुस्तात्पर्यस्य क्लृप्ततयाऽवगमात्। तदेव इत्येवकारपूरणमिति भावः। अत्र महावैकुण्ठरूपमिति यदुक्तम्, तन्महावैकुण्ठादिपरम्। अन्यथा मथुरादीनां नित्यधाम्नां सत्त्वात्, एतदेवेत्येवकारासङ्गतिः स्यात्। न च विष्णोर्धामैव तदेव सत्यमित्यर्थे तात्पर्यमिति वाच्यम्, विष्णुपदेनाऽत्र भगवत्त्वेन कृष्णस्यापि ग्रहणात्। अन्यथा गायत्र्यर्थत्वेन तस्याऽप्रासौ गायत्रीतात्पर्यार्थविवरणरूपश्रीभागवतप्राधान्येन तत्परता न स्यादिति।

"सिद्धान्ततस्त्वभेदेऽपि श्रीशकृष्णस्वरूपयोः।"

इति रसामृतसिन्धुकारिकया तयोरैक्याच्चेति। ब्रह्मस्वरूपत्वं ब्रह्माख्यभगवन्नित्याधिष्ठानत्वेन। तदेतद्गायत्रीमिति। सा सर्ववेदसारभूता या एषा तज्ज्योतिः परमं ब्रह्मेत्यादिना व्याख्यासहिता या गायत्री, तां प्रोच्येत्यर्थः। अग्निपुराणे "यत्राधि-

यत्राधिकृत्य गायत्रीमित्याद्यप्युक्तमग्निपुराणे । तस्मात्—

"अग्नेः पुराणं गायत्रीं समेत्य* भगवत्पराम् ।
भगवन्तं तत्र मत्वा जगज्जन्मादिकारणम् ॥
यत्राऽधिकृत्य गायत्रीमिति लक्षणपूर्वकम् ।
श्रीमद्भागवतं शश्वत् पृथ्व्यां जयति सर्वतः ॥"

तदेवमस्य शास्त्रस्य गायत्रीमधिकृत्य प्रवृत्तिर्दर्शिता । यत्तु सारस्वतकल्पमधिकृत्येति पूर्वमुक्तम् , तच्च गायत्र्या भगवत्प्रतिपादकवाग्विशेषरूपसरस्वतीत्वादुक्तमेव । यदुक्तमग्निपुराणे—

"गायत्युकथानि शास्त्राणि भर्गं प्राणांस्तथैव च ।
ततः स्मृतेयं गायत्री सावित्री यत एव च ॥
प्रकाशिनी सा सवितुर्वाग्रूपत्वात्सरस्वती ।" इति ।

---

राधामोहनी ।

कृत्य" इत्याद्यप्युक्तम् , अर्थात् मुनिना इत्यर्थः । अपिना पुराणान्तरादुत्कर्षसूचकं विशेषणान्तरमुक्तमिति । यद्वा, प्रोच्य—व्याख्याय, तत्र व्याख्यानक्रियाविशेषणं तदेतदिति । तत—सर्ववेदतात्पर्यविषयपरं एतत्तज्ज्योतिरित्यादिवाक्यात्मकमिति । तस्माद् निरुक्तगायत्र्यर्थप्रकर्षकथनपूर्वकनिरुक्तभागवतलक्षणकथनात् । सम्मत्य निरुक्तव्याख्यानेन प्रदर्श्य, तत्र—गायत्र्याम् , मत्वा—निर्णीय । जयति—सारार्थवर्णनमयत्वेनोत्कर्षेण वर्तते । उपसंहरति—तदेवमिति क्रियाविशेषणम् , एवं दर्शनेन भागवतस्य सर्वशास्त्राधिक्यं दर्शितमिति भावः । गायत्युकथानीति उक्थानि वैदिकमन्त्रात्मकशास्त्राणि, गायति प्रकाशयति, सर्वमन्त्राणामादिभूतां गायत्रीमुपजीव्यैव मन्त्रान्तराणामाविर्भावात् । अथवा देवस्य इति गायत्रीस्थपदेन वेदमन्त्रकरणकहविस्त्यागोद्देश्यत्वरूपदेवत्वावच्छिन्नस्य बोधनाद् यज्ञादिकर्मात्मकोक्थप्रकाशक-

---

* संमत्य इति पाठान्तरम् ।

अथ क्रमप्राप्ता व्याख्या—

वेदार्थपरिबृंहित इति । वेदार्थानां परिबृंहणं यस्मात्, तच्चोक्तमितिहासपुराणाभ्यामिति। पुराणानां सामरूप इति। वेदेषु सामवत्पुराणेषु श्रेष्ठ इत्यर्थः । पुराणान्तराणां केषाञ्चिदापाततो रजस्तमसी जुषमाणैस्तत्परत्वाप्रतीतत्वेऽपि वेदानां काण्डत्रय-वाक्यैकवाक्यतायां यथा साम्ना तथा तेषां श्रीभागवतेन प्रति-पाद्ये श्रीभगवत्येव पर्यवसानमिति भावः । तदुक्तम्—

"वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते ॥" इति ।

---

राधामोहनी ।

त्वम्, 'सवितृ'पदेन जगत्कर्तुरिव वेदादिशास्त्रकर्तृकत्वावच्छिन्नस्यापि बोधनात् शास्त्रप्रकाशकत्वं गायत्र्या इति । भर्गम्—भर्गाख्यं ब्रह्म, तथा प्राणान्,—इन्द्रि-याणि, 'धियः' इति गायत्रीस्थधीपदेन इन्द्रियमात्रग्रहणात् । यद्वा, प्राणान् बुद्धि-वृत्तीः । वस्तुतस्तु भर्ग एव प्राणास्तान्, "अन्योऽन्तर आत्मा प्राणमयः" (तै०२।२) इति श्रुतेः "प्राणस्य प्राणश्चक्षुपश्चक्षुः" (के०१।२) इत्यादिश्रुतेश्च प्राणस्य प्राणत्वम्, तद्योक्तृत्वं तत्प्रेरकत्वं च "को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्" (तै० २।७) इत्यादिश्रुतेः । 'गायन्तं त्रायते' इति व्युत्पत्ति-रपि द्रष्टव्या, 'गायति त्रायति' चेति गायत्रीति पर्यवसितम् । तत्परत्वाप्रती-तत्वेऽपि साक्षात् स्वयं भगवत्परत्वाप्रत्ययेऽपि, काण्डत्रयवाक्यतायां कर्मकाण्डज्ञान-काण्डदेवताकाण्डात्मकार्थपरतायाः साक्षात् प्रतीतत्वेऽपि, यथा साम्ना प्रतिपादिते भगवति सकलवेदानां पर्यवसानम्, तथा तेषां सकलपुराणानां पर्यवसानं साक्षात् परम्परया स्वप्रयोज्यबोधविषयतेति । "हरिः सर्वत्र गीयते" इति । साक्षात् पर-

प्रतिपादयिष्यते च तदिदं परमात्मसन्दर्भे । साक्षाद्भगवतोदित इति—'कस्मै येन विभाषितोऽयम्' इत्युपसंहारवाक्यानुसारे ज्ञेयम् । शतविच्छेदसंयुत इति—विस्तरभिया न विव्रियते ।

तदेवं श्रीमद्भागवतं सर्वशास्त्रचक्रवर्तिपदमाप्तमिति स्थिते 'हेमसिंहसमन्वितम्' इत्यत्र हेमसिंहासनारूढमिति टीकाकारैर्यद् व्याख्यातम्, तदेव युक्तम् ।

अतः श्रीमद्भागवतस्यैवाऽभ्यासावश्यकत्वम्, श्रेष्ठत्वञ्च स्कान्दे निर्णीतम्—

"शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः ।"

तदेवं परमार्थं विवित्सुभिः श्रीभागवतमेव साम्प्रतं विचारणीयमिति स्थितम् । )

अत एव सत्स्वपि नानाशास्त्रेष्वेतदेवोक्तम्—

"कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः ॥"

( भा० १ । ३ । ४५ ) इति ।

अर्कतारूपकेण तद्विना नाऽन्येषां सम्यग्वस्तुप्रकाशकत्वमिति

वैद्याभूषणी ।

अत एवेति । वर्णितलक्षणादुत्कर्षादेव हेतोरित्यर्थः । पुरातनानाम्

राधामोहनी ।

म्परया बोध्यंत इति । तदिदमिति । निरुक्तं श्रीभागवतप्राधान्यमित्यर्थः । ज्ञेयं कर्तृवैशिष्ट्येन वैशिष्ट्यमपि ज्ञेयम् । अतः श्रीभगवत्परत्वात्तत्कृतत्वाच्च अत्यावश्यकत्वमत्यावश्यकाध्ययनादिविषयत्वं तत्प्रयोजकतया श्रेष्ठत्वं चेत्यर्थः ॥

तद्विना नान्ये इति । विशेषेण परमप्रयोजनतत्साधनपरमोपास्यवस्त्वप्रकाशका

प्रतिपाद्यते। यस्यैव श्रीमद्भागवतस्य भाष्यभूतं श्रीहयशीर्षपञ्चरात्रे शास्त्रप्रस्तावे गणितं तन्त्रभागवताभिधं तन्त्रम्। यस्य साक्षात् श्रीहनुमद्भाष्य-वासनाभाष्य-सम्बन्धोक्ति-विद्वत्कामधेनु-तत्त्वदीपिका-भावार्थदीपिका-परमहंसप्रिया-शुकहृदयादयो व्याख्याग्रन्था तथा मुक्ताफल-हरिलीला-भक्तिरत्नावल्यादयो निबन्धाश्च विविधा एव तत्तन्मतप्रसिद्धमहानुभावकृता विराजन्ते। यदेव च हेमाद्रिग्रन्थस्य दानखण्डे पुराणदानप्रस्तावे मत्स्यपुरा-

---

वैद्याभूषणी।

ऋषीणामाधुनिकानाञ्च विद्वत्तमानामुपादेयमिदं श्रीभागवतमित्याह—यस्यैवेति। विराजन्ते—सम्प्रति प्रचरन्तीत्यर्थः। धर्म्मशास्त्रकृताञ्चोपादेयमेतदित्याह—यदेव च हेमाद्रीत्यादि। तत्प्रतिपादितो धर्म्मः कृष्णसङ्कीर्त्तनलक्षणः।

राधामोहनी।

इति शेषः। यस्यैव—श्रीभागवतस्यैव, एवकारेण तद्विरुद्धवर्णनराहित्यम्। भाष्यभूतम्—अर्थप्रकाशकम्, यस्य व्याख्याग्रन्था इत्यनेनान्वयः। यथा ( हनुमद्भाष्यादयः ) व्याख्याग्रन्था विराजन्ते, तथा यस्य निबन्धाश्च विराजन्ते इत्यर्थः। निबन्धः—तत्तात्पर्यवर्णनात्मकतदेकदेशसङ्ग्रहः। यदेवेति प्रशस्तमित्यत्राऽन्वितम्। यद्वाक्यत्वेन-श्रीभागवतवचनत्वेन, यत्प्रतिपाद्यधर्मः-भागवतप्रतिपाद्यधर्मः, अङ्गीकृतः-आवश्यकत्वेन निर्णीतः, यदेव—भागवतमेव, विराजमानार्थं—विराजनार्थकं मत्वेति। अत्र हेतुः-भक्तिसुखव्याहारादिलिङ्गेनेति। व्याहारः-समुत्कर्षप्रकाशकत्वम्, तदात्मकेन लिङ्गेन हेतुनेत्यर्थः। यदपौरुषेयं यदात्मकपौरुषेयम्। अचालयता यथाश्रु-

णीयतल्लक्षणधृत्या प्रशस्तम् । हेमाद्रिपरिशेषखण्डस्य कालनिर्णये च कलियुगधर्म्मनिर्णये—"कलिं सभाजयन्त्यार्य्याः" इत्यादिकं यद्वाक्यत्वेनोत्थाप्य यत्प्रतिपादितधर्म्म एव कलावङ्गीकृतः । अथ यदेव कैवल्यमप्यतिक्रम्य भक्तिसुखव्याहारादिलिङ्गेन निजमतस्याऽप्युपरि विराजमानार्थं मत्वा यदपौरुषेयं वेदान्तव्याख्यानं भयादचालयतैव शङ्करावतारतया प्रसिद्धेन वक्ष्यमाणस्वगोपनादिहेतुकभगवदाज्ञाप्रवर्त्तिताद्वयवादेनापि तन्मात्रवर्णितविश्वरूपदर्शनकृतव्रजेश्वरीविस्मयश्रीव्रजकुमारीवसनचौर्य्यादिकं गोविन्दाष्टकादौ वर्णयता तटस्थीभूय निजवचःसाफल्याय स्पृष्टमिति ॥

---

वैद्याभूषणी ।

ननु चेदीदृशं श्रीभागवतम्, तर्हि श्रीशङ्कराचार्य्यः कुतस्तन्न व्याचष्टेति चेत्, तत्राह—अथ यदेव कैवल्यमित्यादि । अयं भावः—प्रलयाधिकारी खलु हरेर्भक्तोऽहमुपनिषदादि व्याख्याय, तत्सिद्धान्तं विलाप्य तस्याऽऽज्ञां पालितवानेवास्मि, अथ तदतिप्रिये श्रीभागवतेऽपि चालिते स प्रभुर्मयि कुप्येदतो न तच्चाल्यम्; एवं सति मे सारज्ञता सुखसम्पच्च न

राधामोहनी ।

तार्थपरतयैव शङ्कराचार्येण भागवतं व्याख्यातमित्यत आह—वक्ष्यमाणेति,

"प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ।"

इति "मायावादमसच्छास्त्रम्" इत्यादिरूपेत्यर्थः । तटस्थीभूय।श्रीभागवतवर्णनमित्यनुल्लिख्य ॥

यदेव किल दृष्ट्वा श्रीमध्वाचार्य्यचरणैर्वैष्णवान्तराणां तच्छिष्यान्तरपुण्यारण्यादिरीतिकव्याख्याप्रवेशशङ्कया तत्र तात्पर्य्यान्तरं लिखद्भिर्वर्त्मोपदेशः कृत इति च सात्वता वर्णयन्ति। तस्माद्युक्तमुक्तं तत्रैव प्रथमस्कन्धे—

वैद्याभूषणी।

स्यात्, अतः कथञ्चित्तत् स्पर्शनीयमिति तन्मात्रोक्तं विश्वरूपदर्शनादि स्वकाव्ये निबबन्धेति तेन चादृतं तदिति सर्वमान्यं श्रीभागवतमिति ॥

श्रीमध्वमुनेस्तु परमोपास्यं श्रीभागवतमित्याह—यदेव किलेति। शङ्करेण नैतद्धि चालितं किन्त्वादृतमेवेति विभाव्येत्यर्थः। किन्तु तच्छिष्यैः पुण्यारण्यादिभिस्तदन्यथा व्याख्यातम्। तेन वैष्णनानां निर्गुणचिन्मात्रपरमिदमिति भ्रान्तिः स्यादिति शङ्कया हेतुना तद्भ्रान्तिच्छेदाय तत्र तात्पर्य्यान्तरं भगवत्परतारूपं ततोऽन्यत्तात्पर्यं लिखद्भिस्तस्य व्याख्यानवर्त्मोपदिष्टं वैष्णवान् प्रतीति। मध्वाचार्य्यचरणैरित्यत्यादरसूचकवहुत्वनिर्देशः स्वपूर्वाचार्यत्वादिति बोध्यम्। वायुदेवः खलु मध्वमुनिः सर्वज्ञोऽतिविक्रमो यो दिग्विजयिनं चतुर्दशविधं चतुर्दशभिः क्षणैर्निर्जित्यासनानि तस्य चतुर्दश जग्राह, स च तच्छिष्यः पद्मनाभाभिधानो बभूवेति प्रसिद्धम्। तस्मादिति—प्रोक्तगुणकत्वाद्धेहोरित्यर्थः।

राधामोहनी।

दृष्ट्वेत्यस्य वैष्णवमतप्रवेशो हेतुत्वम्। तच्छिष्यतां शङ्कराचार्यशिष्यतां (?) वर्णयन्तीति। यस्यैवेत्यादौ यत्पदानामुत्तरवाक्यस्थतया न तत्पदापेक्षेति। तस्मादिति। एतैर्बहुतरप्रेक्षावद्भिरादृतत्वेन निर्णीतसमुत्कर्षादित्यर्थः।

"तदिदं ग्राहयामास सुतमात्मवतां वरम् ।
सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ॥" (भा० १।४।४१)

द्वादशे—

"सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नाऽन्यत्र स्याद्रतिः क्वचित्॥"(भा०१२।१२।१५)

तथा प्रथमे—

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ! ॥"
(भा० १।१।३)

अत एव तत्रैव—

"यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतां तमोऽन्धम् ।

---

वैद्याभूषणी ।

य इति । अन्धन्तमोऽविद्याम् अतितितीर्षतां संसारिणां करुणया यः पुराणगुह्यं श्रीभागवतमाहेत्यन्वयः । स्वानुभावम्—असाधारणप्रभावमित्यर्थः ॥

राधामोहनी ।

आत्मविदाम्—ब्रह्मविदाम् । 'सारं सारम्' इति वीप्सया सकलसारोद्धारो बोध्यते । सारश्च भगवन्माहात्म्यं तद्भजनं च । तत्सारत्वं विना मुक्तस्यापि शुकस्य कथमत्र प्रवृत्तिरिति भावः । फलमिति सकलवेदादिशास्त्रतात्पर्यार्थावगमलक्षितार्थरूपमित्यर्थः । गुरुं मुनीनामिति । गुरुत्वं ज्ञानातिशयत्वम् , न तूपदेष्टृत्वम् , मुनीनामिति

संसारिणां करुणयाऽऽह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥" (भा० १।२।३) इति ॥

यतः—

"तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः ।
प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः ॥
अत्रिर्वसिष्ठश्च्यवनः शरद्वानरिष्ठनेमिर्भृगुरङ्गिराश्च ।
पराशरो गाधिसुतोऽथ राम उतथ्य इन्द्रप्रमदेध्मवाहौ ॥
मेधातिथिर्देवल आर्ष्टिषेणो भरद्वाजो गौतमः पिप्पलादः ।
मैत्रेय और्व्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च ॥
अन्ये च देवर्षिब्रह्मर्षिवर्य्या राजर्षिवर्य्या अरुणादयश्च ।
नानार्षेयप्रवरांस्तान् समेतानभ्यर्च्य राजा शिरसा ववन्दे ॥
सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत् ।
विज्ञापयामास विविक्तचेता उपस्थितोऽग्रे निगृहीतपाणिः" ॥

( भा० १।१९।८–१२ )

---

दैग्याभूषणी ।

मुनिनां गुरुमित्युक्तम्, तत् कथमित्यत्राह—यत इति । यत इत्यस्य इत्युक्तमिति परेण सम्बन्धः । और्व इति । विप्रवंशं विनाशयद्भ्यो दुष्टेभ्यः क्षत्रियेभ्यो भयाद् गर्भादाकृष्योरौ तन्मात्रा स्थापितस्ततो जातः क्षत्रियांस्तान् स्वेन तेजसा भस्मीचकार इति भारते कथाऽस्ति । निगृहीतपा-

राधामोहनी ।

सामान्यतो निर्देशात् । एवं चोपदेष्टृत्वेन इत्यस्य परीक्षितं प्रत्युपदेष्टृत्वेनेत्यर्थः ॥

इत्याद्यनन्तरम्—

ततश्च वः पृच्छ्यमिदं विपृच्छे
विश्रभ्य विप्रा इतिकृत्यतायाम्।
सर्वात्मना म्रियमाणैश्च कृत्यं
शुद्धञ्च तत्राऽमृशताऽभियुक्ताः॥" (भा० १।१९।२४)

इति पृच्छति राज्ञि—

"तत्राऽभवद्भगवान् व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः।
अलक्ष्यलिङ्गो निजलाभतुष्टो वृतश्च बालैरवधूतवेषः॥"
(भा० १।१९।२५)

ततश्च—

"प्रत्युत्थिता मुनयः स्वासनेभ्यः"। (भा० १।१९।२८)

इत्याद्यन्ते—

स संवृतस्तत्र महान्महीयसां ब्रह्मर्षिराजर्षिसुरर्षिवर्य्यैः।
व्यरोचताऽलं भगवान् यथेन्दुर्ग्रहर्क्षतारानिकरैः परीतः॥"
(भा० १।१९।३०)

इत्युक्तम्॥

---

वैद्याभूषणी।

णिः—योजिताञ्जलिपुटः। एवं कर्त्तव्यस्य भावः इतिकर्त्तव्यता तस्यां विषये सर्वावस्थायां पुंसः किं कृत्यम्, तत्रापि म्रियमाणैश्च किं कृत्यम्, तच्च शुद्धं हिंसाशून्यं तत्राऽमृशत यूयम्। गां पृथिवीम्। अनपेक्षः—निस्पृहः। निजस्य—शुद्धिपूर्त्तिकर्त्तुः स्वस्वामिनः कृष्णस्य लाभेन तुष्टः। तत्र सभायाम्॥

अत्र यद्यपि तत्र श्रीव्यासनारदौ तस्यापि गुरुपरमगुरू, तथापि पुनस्तन्मुखनिःसृतं श्रीभागवतं तयोरप्यश्रुतचरमिव जातमित्येवं श्रीशुकस्तावप्युपदिदेश देश्यमित्यभिप्रायः।

यदुक्तम्—

"शुकमुखादमृतद्रवसंयुतम्।" (भा० १।१।३) इति।

तस्मादेवमपि श्रीभागवतस्यैव सर्वाधिक्यम्। मात्स्यादीनां यत् पुराणाधिक्यं श्रूयते, तत्त्वापेक्षिकमिति। अहो किं बहुना, श्रीकृष्णप्रतिनिधिरूपमेवेदम्। यत उक्तं प्रथमस्कन्धे—

"कृष्णे स्वधामोपगते धर्म्मज्ञानादिभिः सह।
कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः॥"
(भा० १।३।४५) इति।

---

वैद्याभूषणी।

वक्तव्यं योजयति—अत्र यद्यपीत्यादिना। तस्मादेवमिति। तद्वक्तुः श्रीशुकस्य सर्वगुरुत्वेनाऽपीत्यर्थः। आपेक्षिकमिति एतदन्यपुराणापेक्षयेत्यर्थः। अथ परमोत्कर्षमाह—अहो किमिति। अत एवेति—

राधामोहनी।

अश्रुतचरमिवेति। तदानीमस्मृतत्वादिति भावः। तावप्युपदिदेशेति, तावपि-व्यासनारदावपि। अपिकाराद् रामभृग्वङ्गिरोवसिष्ठपराशरादीनां ग्रहणम्, तेषामपि वेदपुराणवेत्तृत्वात्। उपदिदेश स्मारयामास। यद्वा, देश्यं मधुरव्याख्यानकौशलं उपदिदेशैवेत्यर्थः, अश्रुतचरमिवेत्युक्तत्वात्। तथा च तयोरपि तथा व्याख्यानकौशल्योत्पत्त्येऽपि शुकदेवं प्रति तथानुपदेशादिति भावः। आपेक्षिकमिति—

अत एव सर्वगुणयुक्तत्वमस्यैव दृष्टम्—
"धर्म्मः प्रोज्झितकैतवोऽत्र" इत्यादिना,
"वेदाः पुराणं काव्यञ्च प्रभुर्मित्रं प्रियेव च ।
बोधयन्तीति हि प्राहुस्त्रिवृद्भागवतं पुनः" ॥

---

वैद्याभूषणी ।

कृष्णप्रतिनिधित्वात् कृष्णवत् सर्वगुणयुक्तमित्यर्थः । प्रियेव—कान्तेव । त्रिवृत्—वेदादित्रयगुणयुक्तमित्यर्थः । तस्मादिति । वेदसापेक्षत्वम्—वेदवाक्येन पुराणप्रामाण्यमित्यर्थः । अत एवेति—परमार्थवेदकत्वाद् वेदान्तस्येव भागवतस्य परमश्रुतिरूपत्वमित्यर्थः ।

राधामोहनी ।

भागवतान्यपुराणापेक्षिकमित्यर्थः । धर्मज्ञानादिभिः सहेति—आदिना भक्त्यादि-परिग्रहः, यथोत्तरमुत्तमत्वमेषाम् । कलौ नष्टदृशां नष्टज्ञानादीनां सम्बन्धे धर्मज्ञानादिभिः सह एष पुराणार्कोऽधुना उदित इत्यन्वयः । चर्मचक्षुर्यथा सूर्यांशस्तथा ज्ञानचक्षुः श्रीभागवतांश इति द्योतनाय श्रीभागवतस्यार्कतया रूपकमिति भावः । वेदा इति—वेदाः प्रभुरिव बोधयन्तीत्यन्वयः । प्रभुपदेन 'राजा' इत्युच्यते, तथा च राजा यथाऽऽज्ञापयति तथैवामात्यादयः कुर्वन्ति, न तु तद्वाक्यं भद्रमभद्रं वा इति विचारयन्ति, तथा वेदवचनेन विहितं कर्म विद्वांसो यथा यथाऽभिहितं प्रमाणनिरपेक्षं तथैव कुर्वन्ति । पुराणं मित्रमिव प्रमाणयुक्तिसापेक्षं बोधयति, विभक्तिविपरिणामेनान्वयः । काव्यम्—काव्यशास्त्रं प्रियेव कान्तेव सरसतामापादयद्बोधयति । भागवतम्—भागवताख्यशास्त्रम्, त्रिवृत् प्रभुमित्रकान्तासदृक्, वेद इव प्रमाणनिरपेक्षतया प्रभुरिव, इतरपुराणमिव प्रमाणयुक्तिसम्बलितत्वेन हितबोधकत्वेन च मित्रमिव, कान्तेव सरसतापादनं चेति सर्वोत्तममित्यर्थः ।

इति मुक्ताफले हेमाद्रिकारवचनेन च* । तस्माद् मन्यन्तां वा केचित् पुराणान्तरेषु वेदस्य सापेक्षत्वम् । श्रीभागवते तु तथा सम्भावना स्वयमेव निरस्तेत्यपि† स्वयमेव लब्धम् । अत एव परमश्रुतिरूपत्वं तस्य । यथोक्तम्—

"कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह ।
संवादः समभूत् तात ! यत्रैषा सात्वती श्रुतिः ॥" इति ।
( भा० १।४।७ )

अथ यत् खलु सर्वं पुराणजातमाविर्भाव्येत्यादिकं पूर्वमुक्तम्, तत्तु प्रथमस्कन्धगतश्रीव्यासनारदसंवादेनैव प्रमेयम् ॥

---

वैद्याभूषणी ।

यत्र—संवादे । सात्वती—वैष्णवीत्यर्थः । अथेति । "इदं भगवता पूर्वम्" इत्यादिद्वादशोक्तब्रह्मनारायणसंवादरूपमष्टादशसु मध्ये प्रकटितम्, व्यासनारदसंवादरूपं तत्रैव प्रवेशितम्, तदुभयस्य लक्षणसंख्ये तु मात्स्यादावुक्ते इति बोध्यमित्यर्थः । एवमेव भारतोपक्रमेऽपि दृष्टम् । आदावाख्यानैर्विना चतुर्विंशतिसहस्रं भारतम्, ततस्तैः सहितं पञ्चाशत्सहस्रम्, ततस्तैस्ततोऽप्यधिकमतोऽप्यधिकमिति, तद्वत् ॥

राधामोहनी ।

हेमाद्रिकारस्य—बोपदेवस्य, हेमाद्रिकारत्वेन तदुपादानं युक्तिशास्त्रदर्शित्व-लाभाय । सात्वती—भागवती ॥

---

* 'हेमाद्रिकारस्य वचनेन च' इति पाठान्तरम् ।

† 'परास्तेत्यपि' पाठभेदः ।

तदेवं परमनिःश्रेयसनिश्चयाय श्रीभागवतमेव पौर्वापर्याविरोधेन विचार्यते । तत्राऽस्मिन् सन्दर्भषट्कात्मके ग्रन्थे सूत्रस्थानीयमवतारिकावाक्यम्*, विषयवाक्यम्—श्रीभागवतवाक्यम् । भाष्यरूपा तद्व्याख्या तु सम्प्रति मध्यदेशादौ व्याप्तानद्वैतवादिनो नूनं भगवन्महिमानमवगाहयितुं तद्वादेन कर्बुरितलिपीनां परम-

वैद्याभूषणी ।

तदेवमिति । ननु वेद एवास्माकं प्रमाणमिति प्रतिज्ञाय पुराणमेव तत् स्वीकरोतीति किमिदं कौतुकमिति चेत्, मैवं भ्रमितव्यम्, "एवं वा अरेऽस्य महतो भूतस्य" इत्यादिश्रुत्यैव पुराणस्य वेदत्वाभिधानात् । वेदेषु वेदान्तस्येव पुराणेषु श्रीभागवतस्यैव श्रैष्ठ्यनिर्णयाच्च तदेव प्रमाणमिति किमसङ्गतमुक्तमिति । अथ ब्रह्मसूत्रभाष्यरीत्या सन्दर्भस्यास्य प्रवृत्तिरित्याह—तत्रास्मिन्निति । विचारार्हवाक्यं विषयवाक्यम् । भाष्यरूपा तद्व्याख्येति । अयमर्थः—श्रीधरस्वामिनो वैष्णवा एव, तट्टीकासु भगव-

राधामोहनी ।

परमनिःश्रेयसनिश्चयाय—परमनिःश्रेयसतत्साधननिश्चयाय । श्रीभागवतमेवेति पुराणादिवचनान्यत्र श्रीभागवतवचनव्याख्यासंवादार्थमेवोक्तानीति बोध्यम् । विचार्यते—शास्त्रतत्त्वार्थकतया ज्ञाप्यते, ज्ञापनम् ज्ञानानुकूलव्यापारः, स च व्यापारः शास्त्रान्तरं युक्तिवाक्यं च । तत्रेति—विचारात्मकेऽस्मिन् ग्रन्थे इत्यर्थः । यद्वा, तत्रेत्यस्य 'सूत्रस्थानीयम्' इत्यनेन 'विषयवाक्यम्' इत्यनेन चान्वयः । सूत्रस्थानीयम्-मूलस्थानीयम् । अवतारणिकावाक्यम्—भागवतवचनोत्थापकाकाङ्क्षो-

* 'अवतारणिकावाक्यम्' इति पाठान्तरम् ।

वैष्णवानां श्रीधरस्वामिचरणानां शुद्धवैष्णवसिद्धान्तानुगता चेत्, तर्हि यथावदेव विलिख्यते । क्वचित्तेषामेवाऽन्यत्र व्याख्यानुसारेण द्रविडादिदेशविख्यातपरमभागवतानाम्, तेषामेव बाहुल्येन तत्र वैष्णवत्वेन प्रसिद्धत्वात् । श्रीभागवत एव—

"क्वचित् क्वचिद् महाराज ! द्रविड़ेषु च भूरिशः ।"

( भा० ११।५।७८ )

इत्यनेन प्रमितमहिम्नां साक्षात् श्रीप्रभृतितः प्रवृत्तसम्प्र-

---

वैद्याभूषणी ।

द्विग्रहगुणविभूतिधाम्ना तत्पार्षदतनूनाञ्च नित्यत्वोक्तेः, भगवद्भक्तेः सर्वोत्कृष्टमोक्षानुवृत्त्योरुक्तेश्च । तथापि क्वचित् क्वचिन्मायावादोल्लेखस्तद्वादिनो भगवद्भक्तौ प्रवेशयितुं वडिशामिषार्पणन्यायेनैवेति विदितमिति । शुद्धवैष्णवेति । यथा सांख्यादिशास्त्राणामविरुद्धांशः सर्वैः स्वीकृतस्तद्वदिदं बोध्यम् । क्वचित्तेषामेवेति । क्वचित् स्थलान्तरीयस्वामिव्याख्या-

राधामोहनी ।

स्थापकवाक्यम् । विषयवाक्यम्—विचारवाक्यम् । तद्व्याख्या—भागवतव्याख्या । अवगाहयितुम्—बोधयितुम्, तत्सम्प्रदायान्तर्गतत्वादिति । तद्वादेन—अद्वैतवादिमतबोधनत्वेन, कर्बुरितलिपीनाम्—शुद्धवैष्णवमततात्पर्यकत्वेन विचित्रवाक्यानाम्, परमवैष्णवानाम्—ज्ञानमपेक्ष्य कृष्णभक्तेरौत्कर्ष्यबोधकव्याख्यातृतया वैष्णवत्वेन प्रसिद्धानाम्, वैष्णवसिद्धान्तानुगतेति व्याख्येति शेषः । चेदिति—यदि दृश्यत इत्यर्थः । एतेन यत्र शुद्धाद्वैतवादमतानुवादव्याख्या सा नात्र ग्राह्या इत्याह—क्वचिदिति । अन्यथा इत्यनेनास्यान्वयः । तेषामेव श्रीधरस्वामिचरणानामेव । अन्यत्र—वचनान्तरव्याख्याने । दृष्टव्याख्यानुसारेण—दृष्टशुद्धवैष्णव-

दायानां श्रीवैष्णवाभिधानां श्रीरामानुजभगवत्पादविरचितश्रीभाष्यादिदृष्टमतप्रामाण्येन मूलग्रन्थस्वारस्येन चाऽन्यथा च । अद्वैतव्याख्यानन्तु प्रसिद्धत्वान्नाऽतिवितायते ॥

अत्र च स्वदर्शितार्थविशेषप्रामाण्यायैव, न तु श्रीमद्भागवतवाक्यप्रामाण्याय प्रमणानि श्रुतिपुराणादिवचनानि यथादृष्टमेवोदाहरणीयानि, क्वचित् स्वयमदृष्टाकराणि* च तत्त्ववादगुरूणा-

वैद्याभूषणी ।

नुसारेण श्रीभाष्यादिदृष्टमतप्रामाण्येन मूलश्रीभागवतस्वारस्येन चाऽन्यथा च भाष्यरूपा तद्व्याख्या मया लिख्यते इति मत्कपोलकल्पनं किञ्चिदपि नास्तीति प्रमाणोपेताऽत्र टीकेत्यर्थः । ननु पूर्वपक्षज्ञानायाऽद्वैतञ्च व्याख्येयमिति तत्राह—अद्वैतेति ॥

अत्रेति । इह ग्रन्थे यानि श्रुतिपुराणादिवचनानि मया ध्रियन्ते, तानि स्वदर्शितार्थविशेषप्रामाण्यायैव, न तु श्रीभागवतवाक्यप्रामाण्याय,

राधामोहनी ।

मतार्थानुसारेण । तत्र—द्रविडादौ, आदिना कार्णाटतैलङ्गादिपरिग्रहः । द्रविडेष्विति बहुवचनेन कार्णाटादिपरिग्रहः । श्रीवैष्णवाभिधानामित्यस्य 'मता' इत्यनेनान्वयः । श्रीभाष्येति—वेदान्तसूत्रभाष्येत्यर्थः । मतप्रामाण्येन प्रागुक्तयुक्त्या निर्णीतप्रामाण्यकमतानुसारेण मूलविरुद्धत्वेऽसङ्गतं स्यादित्यत आह—मूलस्वारस्येनेति । एतेन क्वचित् तत्तन्मतपरित्यागेनापि व्याख्येयमिति सूचितम् । अन्यथा चेति 'लिख्यते' पूर्वेणान्वयः, स्वामिचरणमतानुसारिमतेनेत्यर्थः ॥

* अदृष्टचराणीति राधामोहनीसम्मतः पाठः ।

मनाधुनिकानां* प्रचुरप्रचारितवैष्णवमतविशेषाणां दक्षिणादिदेश-

वैद्याभूषणी ।

तस्य स्वतःप्रमाणत्वात् । तानि च यथादृष्टमेवोदाहरणीयानि मूलग्रन्थान् विलोक्योत्थापितानीत्यर्थः । कानिचिद्वाक्यानि तु मदृष्टाकराण्यस्मदाचार्यश्रीमध्वमुनिदृष्टाकराण्येव क्वचिन्मया ध्रियन्ते इत्याह—क्वचिदिति । मद्व्याख्याने क्वचिदर्थविशेषे प्रामाण्याय श्रीमध्वाचार्यचरणानां भागवततात्पर्यादिभ्यो ग्रन्थेभ्यः संगृहीतानि श्रुतिपुराणादिवचनानि ध्रियन्त इत्यनुषङ्गः । अत्राऽस्य ग्रन्थकर्तुः सत्यवादित्वं ध्वनितम् । कौमारब्रह्मचर्यवान्नैष्ठिको यः सत्यतपोनिधिः स्वप्नेऽप्यनृतं नोचे चेति प्रसिद्धम् । तेषां कीदृशानामित्याह—तत्त्वेति । सर्वं वस्तु सत्यमिति वादस्तत्त्ववादस्तदुपदेष्टृणामित्यर्थः । अनाधुनिकानाम्—शङ्करसमसमयानाम् । शङ्करेण सह विवादे मध्वस्य मतं व्यासः स्वीचक्रे, शङ्करन्तु तत्याजेत्यैतिह्यमस्ति । प्रचारितेति । भक्तानां विप्राणामेव मोक्षः,

राधामोहनी ।

यथादृष्टमिति उदाहरणक्रियाविशेषणम् । स्वयमदृष्टचराणीत्यस्य परिगृहीतानीति परेणान्वयः । स्वयमदृष्टचराणीत्यनेन मतस्यैतस्य गौरवं सूचितम् । तत्त्ववाद्गुरूणाम्—तत्त्वविचारगुरूणाम्, श्रीमच्छङ्कराचार्यशिष्यतां लब्ध्वाऽपि' इत्यनेन तस्य तस्य ज्ञातस्यापि त्यागे तस्य तस्य सदोषत्वं सूचितम् । मतस्यैतस्य प्रमाणसिद्धत्वं दर्शयति—तैश्चैवमुक्तमिति । तैः श्रीमध्वाचार्यचरणैः । ज्ञेयमिति ।

* "श्रीशङ्कराचार्य्यशिष्यतां लब्ध्वाऽपि श्रीभगवत्पक्षपातेन ततो विच्छिद्य" इत्यधिकः पाठः क्वचिद् दृश्यते, विवृतश्च श्रीगोस्वामिभिः ।

विख्यातशिष्योपशिष्यीभूतविजयध्वजव्यासतीर्थादिवेदवेदार्थविद्वद्वराणां श्रीमध्वाचार्य्यचरणानां भागवततात्पर्य्यभारततात्पर्य्यब्रह्मसूत्रभाष्येभ्यः संगृहीतानि । तैश्चैवमुक्तं भारततात्पर्य्ये—

"शास्त्रान्तराणि संजानन् वेदान्तस्य प्रसादतः ।
देशे देशे तथा ग्रन्थान् दृष्ट्वा चैव पृथग्विधान् ॥
यथा स भगवान् व्यासः साक्षान्नारायणः प्रभुः ।
जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया ॥" इति ।

---

वैद्याभूषणी ।

देवा भक्तेषु मुख्याः, विरिञ्चिस्यैव सायुज्यम्, लक्ष्म्या जीवकोटित्वमित्येवं मतविशेषः । दक्षिणादिदेशेति । तेन गौडेऽपि माधवेन्द्रादयस्तदुपशिष्याः कतिचिद् बभूवुरित्यर्थः । शास्त्रान्तराणीति तेन स्वस्य दृष्टसर्वाकरता व्यज्यते दिग्विजयित्वञ्चेत्युपोद्घातो व्याख्यातः ॥

राधामोहनी ।

अत्रेदमवधेयम्, महानुभावश्रीधरस्वामिप्रभृतिमतेषु यद्युक्तिशास्त्रनिर्णीतं तत्तदेव मतं सङ्कल्प्य स्वमतमाविष्कृतम्, न त्वेतेषां कस्यापि सम्प्रदायान्तर्गतोऽयं ग्रन्थकार इति दर्शितम् । तत्र निर्विशेषब्रह्मोपासकमायावादिश्रीमच्छङ्कराचार्य्यमतमुपेक्षितम्, स्वमतभक्तिशास्त्रविरुद्धत्वात् । किन्तु तस्य हृद्गतं निगूढं भागवतमतमपि गोपीवस्त्रहरणवर्णनादिद्वारा निर्णीय तच्छिष्यपरम्परासु भक्तिप्रधानमतमाश्रित्य सम्प्रदायभेदो जात इति 'भागवतः' 'स्मार्तः' इत्यद्वैतवादिसम्प्रदायद्वयम् । तत्र भागवतसम्प्रदायान्तर्गतः श्रीधरस्वामी, तस्य वैकुण्ठनाथप्रधानतया भागवतव्याख्यानेऽपि तद्व्याख्यातभगवद्रूपतद्भक्तिप्राधान्यमेवादृतम्, न तु सर्वं तन्मतम् । तथा श्रीमद्रामानुजाचार्य्यः विशिष्टाद्वैतवादी स्वयं भगवत्त्वेन लक्ष्मीनाथं

तत्र तदुद्धृता श्रुतिश्चतुर्वेदशिखाद्या, पुराणञ्च गारुणादीनां सम्प्रति सर्वत्राप्रचरद्रूपमंशादिकम्, संहिता च महासंहितादिका, तन्त्रञ्च तन्त्रभागवतादिकं ब्रह्मतर्कादिकमिति ज्ञेयम् ॥

राधामोहनी ।

संस्थाप्य तदुपासको जगदुपादानतया प्रकृतिमनङ्गीकृत्य परमेश्वरस्वरूपतद्धर्मजडांश-परिणामेन जगदुत्पत्तिं स्वीकृतवान् । तन्मतमपि सर्वं श्रीभागवततात्पर्यविषयः । किन्तु मायावादिनिरासजीवतत्त्वजगत्सत्यत्वादितद्वर्णितांशमादाय स्वव्याख्यापोषणमत्र ग्रन्थे कृतम् । तथा श्रीमध्वाचार्यस्य द्वैतवादिनोऽपि न सर्वं मतं गृहीतम्, तन्मतेऽपि स्वयं भगवान् श्रीविष्णुरेव, लक्ष्म्या एव प्रधानशक्तितया व्रजलीलातत्परिकराणां सर्वतो मुख्यता न तदभिप्रेता । एवं तेन 'ज्ञानप्राधान्यं मुक्तिः प्रधानपुरुषार्थः' इति च भाष्ये दर्शितम् । परन्तु तन्मतसिद्धम्—'भगवतः सगुणत्वम्, नित्या प्रकृतिः, तत्परिणामो जगत् सत्यम्, ब्रह्मतटस्थांशा जीवास्ततो भिन्नाः' इत्यादिकं मतं गृहीतम् । प्रकृतेर्ब्रह्मरूपता तेनाऽनङ्गीकृता इति स्वमताद्विशेषः । किन्तु द्वैताद्वैतवादिभास्करीयमतम् 'ब्रह्मस्वरूपशक्त्यात्मना परिणामो जगत्, सा च शक्तिः त्रिगुणा प्रकृतिः' इति तदेव स्वानुमतमिति लभ्यते । परं चैतत् सर्वमतमेव साधु,

"बह्वाचार्यविभेदेन भगवन्तमुपासते"

इत्युक्तत्वादिति । तथा च श्रीमन्महाप्रभुचरणानां मतं सर्वतो महत्, सर्वमतसारसंग्रहरूपत्वात् । एवं श्रीमन्मध्वाचार्यो यथा श्रीमच्छङ्कराचार्यशिष्योऽपि ब्रह्मसम्प्रदायमाश्रित्य ब्रह्मसूत्रभाष्यादिकं कृत्वा स्वातन्त्र्येण सम्प्रदायप्रवर्तकः, तथा स्वयं भगवदवतारोऽपि श्रीकृष्णचैतन्यः स्वमतमेव तत्सम्प्रदायान्तर्गतत्वं गुर्वाश्रयणस्यावश्यकत्वमङ्गीकृत्य प्रवर्तितवान् स्वस्वरूपश्रीमदद्वैताचार्यादिद्वारेति, तदनुज्ञया च गोस्वामिभिस्तत्प्रकटीकृतम् । तत्र ब्रह्मसूत्रस्य भाष्यान्तरमकृत्वा भगवता नारायणेन ब्रह्मणे उपदिष्टं श्रीमद्भागवतरूपभाष्यमेव व्याख्यातुमयमारम्भः । यद्यपि "यो ब्रह्माणं विदधाति पूर्वं यो वैवेदांश्च प्रहिणोति तस्मै" (श्वे० ६,

अथ नमस्कुर्वन्नेव तथाभूतस्य श्रीमद्भागवतस्य तात्पर्यं तद्वक्तुर्हृदयनिष्ठापर्यालोचनया संक्षेपतस्तावन्निर्द्धारयति—

"स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽ-
प्यजितरुचिरलीलाकृष्टसारस्तदीयम् ।

---

वैद्याभूषणी ।

अथ यस्य ब्रह्मेति पद्योक्तं सम्बन्धि कृष्णतत्त्वं तद्भक्तिलक्षणमभिधेयं तत्प्रेमलक्षणं पुमर्थञ्च निरूपतया पद्येन तावद् ग्रन्थं प्रवर्त्तयन् ग्रन्थकृद-वतारयति—अथेति मङ्गलार्थम् । यस्मिन् शास्त्रवक्तुर्हृदयनिष्ठा प्रतीयते, तदेव शास्त्रप्रतिपाद्यं वस्तु, न त्वन्यदित्यर्थः । स्वेति । तदीयम्—

राधामोहनी ।

१८ ) इत्यादिश्रुत्या प्राग्दर्शितश्रुतिभिश्च सर्गादौ ऋगादिपुराणाद्यात्मकवेदसमुदायं ब्रह्मणे भगवान् उपदिदेश, तथापि तदुपदेशोऽन्तर्यामिरूपेण हृदि प्रवर्तनरूप इति वेदानां तात्पर्यं दुरूहं मत्वा पृच्छते ब्रह्मणे साक्षान्नारायणेन तदवधारणाय श्रीभागवतमेव स्फुटमुपदिष्टमिति भागवतव्याख्यानमेवोचितमिति ॥

एतावता प्रबन्धेन शिष्यप्रवर्तनायाभिधेयप्रकर्षं प्रदर्श्य ग्रन्थमारभते—अथेति । तद्वक्तुः श्रीभागवतवक्तुः शुकस्य, हृदयनिष्ठा श्रीकृष्णतद्भजनादिषु मनसः समाधिः, तत्पर्यालोचनया—पूर्वापरतद्वचनेषु तत्पर्यालोचनया । स्वसुखेति—तस्य ब्रह्मात्मकतया स्वात्मकस्वस्वप्रकाशसुखेनैव इत्यर्थः । यद्वा, स्वस्य यत्सुखम्,

"आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम् ।"

इति श्रुतिसिद्धं तेनैवेत्यर्थः । अस्यां श्रुतौ जीवपरं ब्रह्मपदम्, "द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च" ( मै० ६।२२ ) इति श्रुतेः । यद्यपि सात्वतमते जीवस्याऽणुत्वम्, तथापि बृहत्त्वांशं परित्यज्य चेतनत्वेन जीवस्य ब्रह्मपदेन निर्देशः

व्यतनुत कृपया यस्तत्त्वदीपं पुराणं
तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥"
( भा० १२।१२।६८ )

टीका च श्रीधरस्वामिविरचिता—

"श्रीगुरुं नमस्करोति । स्वसुखेनैव निभृतं पूर्णं चेतो यस्य सः । तेनैव व्युदस्तोऽन्यस्मिन् भावो यस्य तथाभूतोऽप्यजितस्य रुचिराभिर्लीलाभिराकृष्टः सारः स्वसुखगतं धैर्यं यस्य सः । तत्त्वदीपं परमार्थप्रकाशकं श्रीभागवतं यो व्यतनुत, तं नतोऽस्मि" इत्येषा ।

एवमेव द्वितीये तद्वाक्यमेव—

"प्रायेण मुनयो राजन्" ( भा० २।१।७ )

---

वैद्याभूषणी ।

अजितनिरूपकं पुराणमित्यर्थः । टीका चेति । स्वसुखेनेति । स्वमसाधारणं जीवानन्दादुत्कृष्टम्, गुडादिव मधु, यदनभिव्यक्तसंस्थानगुणविभूतिलीलमानन्दरूपं स्वप्रकाशं ब्रह्मशब्दव्यपदेश्यं वस्तु, तेनेत्यर्थः । रुचिराभिरिति—पारमैश्वर्य्यसमवेतमाधुर्य्यसम्भिन्नत्वान्मनोज्ञाभिरानन्दै-

राधामोहनी ।

आत्मपदेनेवेति । अत उक्तम्—

"इतरेष्वात्मशब्दस्तु सोपचारो विधीयते ।"

इति माध्वभाष्ये । यद्वा, स्वमसाधारणं ब्रह्मानुभवजनितं सुखं तेनैवेत्यर्थः । पूर्णम्—तृप्तम्, तेनैव ब्रह्मसुखतृप्तचेतस्त्वेनैव स्वसुखेनेत्यर्थः । अजितस्य कृष्णस्य । धैर्यं ब्रह्माकारे मनसो धारणम् । अथवा, धैर्यं निरुक्ततृप्तत्वम्, इदं च श्रीमद्भागवतचर्चायां हेतुः । एवमेव शुकस्यैतादृशमनोवृत्तिपर्यालोचनमेव, तद्वाक्य एव

इत्यादिपद्यत्रयमनुसन्धेयम्। अत्राखिलवृजिनं तादृशभावस्य प्रतिकूलमुदासीनञ्च * ज्ञेयम्। तदेवमिह सम्बन्धितत्त्वं ब्रह्मानन्दादपि प्रकृष्टो रुचिरलीलाविशिष्टः † श्रीमानजित एव। स च पूर्णत्वेन मुख्यतया श्रीकृष्णसंज्ञ एवेति श्रीबादरायणसमाधौ व्यक्तीभविष्यति। तथा प्रयोजनाख्यः पुरुषार्थश्च तादृशतदासक्तिजनकं तत्प्रेमसुखमेव। ततोऽभिधेयमपि तादृशतत्प्रेमजनकं तल्लीलाश्रवणादिलक्षणं तद्भजनमेवेत्यायातम्। अत्र व्यास-

वैद्याभूषणी।

करूपाभिः पानकरसन्यायेन स्फुरदजिततत्परिकरादिभिर्लीलाभिरित्यर्थः। अत्राऽखिलेति। प्रतिकूलं प्रत्याख्यायकम्। उदासीनं त्याजकमि-

राधामोहनी।

शुकवाक्येऽपि। तादृशभावस्येति। मुक्तानामप्याकर्षकस्य भगवद्भावस्येत्यर्थः। सम्बन्धितत्त्वम्—श्रीभागवतप्रतिपाद्यतत्त्वम्। प्रकृष्टरुचिरा प्रकृष्टसुखमयी या लीला श्रीमद्वृन्दावनादिधामक्रीडा तद्विशिष्टः। पूर्णत्वेन स्वतः सिद्धज्ञानशक्त्यादिमत्त्वेन, बादरायणसमाधौ व्याससमाधिलब्धार्थबोधके "कृष्णस्तु भगवान् स्वयम्" (भा०) इत्यादिवाक्ये। तदासक्तिजनकं श्रीकृष्णसंलग्नचेतस्त्वप्रयोजकं प्रेमसुखं प्रेमाख्यभक्त्या सुखानुभवः। ततः श्रीकृष्णाख्यमुख्याभिधेयास्त्यर्थं प्रेमसुखप्रयोजनत्वात्, तद्भजनमेव तद्भजनमपि कृष्णतत्प्रेमसुखादेरप्यभिधेयत्वात्। श्रीसूतः शौनकं

* अत्र 'सर्वम्' इति क्वचिदधिकः पाठः।

† 'प्रकृष्टः' इति पाठान्तरम्।

सूनुमिति ब्रह्मवैवर्त्तानुसारेण श्रीकृष्णवराज्जन्मत एव मायया तस्याऽस्पृष्टत्वं सूचितम् । —श्रीसूतः श्रीशौनकम् ॥

तादृशमेव तात्पर्यं करिष्यमाणतद्ग्रन्थप्रतिपाद्यतत्त्वनिर्णयकृते तत्प्रवक्तृश्रीबादरायणकृते समाधावपि संक्षेपत एव निर्द्धारयति—

"भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।
अपश्यत् पुरुषं पूर्णं मायाञ्च तदपाश्रयाम् ॥

---

वैद्याभूषणी ।

ःयर्थः । ( अङ्कयुग्मं स्कन्धाध्याययोर्ज्ञापकम् ) । श्रीसूतः श्रीशौनकं प्रति निर्द्धारयतीत्यवतारिकावाक्येन सम्बन्धः । एवमुत्तरत्र सर्वत्र बोध्यम् ॥

ग्रन्थवक्तुः शुकस्य यत्र निष्ठाऽवधारिता तत्रैव ग्रन्थकर्त्तुर्व्यासस्या-

राधामोहनी ।

प्रतीति अस्य "अथ नमस्कुर्वन्नेव" इत्यादिचूर्णिकावाक्यस्थेन "निर्धारयति" इत्यनेनान्वयः । एवमुत्तरत्र "निर्धारयति" इति पदेन "श्रीसूतः शौनकं प्रति" इत्यस्यान्वयः ॥

तन्निर्धारणमेव दर्शयति—भक्तियोगेनेत्यादिना । मनसोऽमलत्वम्—विषयपरित्यागः । तथा च प्रत्याहृते चेतसि भक्तियोगेन पूर्णं पुरुषं स्वयं भगवन्तं श्रीकृष्णम् । तदपाश्रयां तद्बहिर्भूताम्,

"ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंश्रये ।
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥"

यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम् ।
परोऽपि मनुतेऽनर्थं तत्कृतञ्चाभिपद्यते ॥
अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ।
लोकस्याजानतो व्यासश्चक्रे सात्वतसंहिताम् ॥
यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ।
भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा ॥
स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजम् ।
शुकमध्यापयामास निवृत्तिनिरतं मुनिम् ॥" ( भा० १।७।४-८)

तत्र—

"स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ।
कस्य वा बृहतीमेतामात्मारामः समभ्यसत् ।
( भा० १।७।९ )

वैद्याभूषणी ।

पि निष्ठामवधारयितुमवतारयति—तादृशमेवेति । निवृत्तिनिरतं ब्रह्मानन्दादन्यस्मिन् स्पृहाविरहितम् । कस्येति संहिताभ्यासस्य किं फल-

राधामोहनी ।

इति विष्णुपुराणात् । सर्वसंश्रयत्वं च तस्य "अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृते तिष्ठतः" ( बृ० ३।८।९ ) इत्यादिश्रुत्या तदिच्छया सर्वधृतिनिबन्धनं गगनवत् सर्वसम्बन्धरूपं च, माया च तदिच्छया जीवं मोहयतीत्याह— ययेति । मोहनं च भगवत्तत्त्वावरणरूपम्, त्रिगुणात्मकं देहं मनुते स्वाभेदेन मन्यते । अनर्थं सुखदुःखादि, तत्कृतं तेन निमित्तीभूतेन लिङ्गदेहेन कृतम् । अभिपद्यते प्रा-

इति श्रीशौनकप्रश्नानन्तरञ्च—

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥
हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिः ।
अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः ॥"

( भा० १।७।१०-११ )

भक्तियोगेन – प्रेम्णा,

"अस्त्वेवमङ्ग भजतां भगवान्मुकुन्दो
मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्" ( भा० ५।६।१८ )

इत्यत्र प्रसिद्धेः ।

---

वैद्याभूषणी ।

मित्यर्थः । अध्यगाद् अधीतवान् ।

राधामोहनी ।

प्नोति । सात्वतसंहिताम्—श्रीभागवतम् । शोकमोहभयापहेति । मायानिवृत्ति-द्वारेति शेषः । मुनिः—ब्रह्ममननशीलोऽपि कस्येति हेतोरिति शेषः । आत्माराम इति । तथा च ब्रह्मविचारात्मकमनने परतत्त्वं निर्विशेषं ब्रह्म निर्धार्य प्रत्याहारेणा-त्मना ब्रह्मानुभवत्वेन मग्नः कथमेतत् समभ्यसदिति भावः । निर्ग्रन्थाः—देहाभि-मानरूपग्रन्थिशून्यतयेतरनिरपेक्षाः । भक्तिम्—कृष्णभक्तिम्, अहैतुकीम्—मुमुक्षा-दिहेतुरहिताम् । इत्थम्भूता—ब्राह्मानन्दादप्याकर्षका गुणा रूपमाधुर्यादयो य-स्य सः । हरिरिति मनो हरति सर्वस्मादिति तदर्थः । प्रेम्णेति । तस्यैव श्रीकृ-ष्णानुभावकत्वादिति । मुक्तिम्—ब्रह्मसाक्षात्काररूपाम् । अतो हरेर्गुणेन श्रवणवि-षयीभूतेन । आक्षिप्ता—ब्रह्मानन्दानुभवात्मकसमाधितोऽप्याकृष्टा मतिर्यस्य सः ।

प्रणिहिते—समाहिते,

"समाधिनाऽनुस्मर तद्विचेष्टितम्" ( भा० १।५।१३ ) इति तं प्रति श्रीनारदोपदेशात् । पूर्णपदस्य मुक्तप्रग्रहया वृत्त्या,

"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
वर्तते निरुपाधिश्च वासुदेवेऽखिलात्मनि ॥" इति पाद्मोत्तरखण्डवचनावष्टम्भेन, तथा—

"कामकामो यजेत् सोममकामः पुरुषं परम् ॥
अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥"
(भा० २।३।९–१० )

---

वैद्याभूषणी ।

मुक्तप्रग्रहयेति । यथाऽश्वः प्रग्रहे मुक्ते बलावधि धावति, एवं पूर्णशब्दः प्रवृत्तः पूर्णत्वावधि प्रवर्तेतेति वक्तुम्, तदवधिश्च स्वयं भगवत्येवेति तथोच्यते इत्यर्थः ॥

राधामोहनी ।

भगवान् "वेत्ति विद्यामविद्यां च स वाच्यो भगवान्" इत्युक्तलक्षणः । विष्णुजनप्रियः इति । परीक्षितासङ्गे हेतुतयोक्तम् । पूर्णपदस्येति । मुक्तप्रग्रहया—बाधकरहितया मुख्यया वृत्त्या पूर्णोऽत्र स्वयं भगवान् उच्यत इत्यन्वयः । तत्र पूर्णः—पूर्णपदबोध्यः । तथा च निर्विशेषणपूर्णपदस्य सर्वसुखपरिपूर्णपरतयाऽन्यत्र बाधेन स्वयं भगवानेवाऽत्र श्लोके उच्यते इत्यर्थः । पुरुष इत्यपि—पुरुषशब्दोऽपि निरुपाधिः अन्यतात्पर्यग्राहकपदादिसमभिव्याहाररहितः । वचनावष्टम्भेन—वचनावगतमुख्यवृत्त्या । अस्य, 'टीकानुसारेण च' इत्यस्य च 'पुरुषोऽत्र स्वयं भगवानेवोच्यते' इत्यनेनान्वयः । तत्र,

इत्यस्य वाक्यद्वयस्य पूर्ववाक्ये "पुरुषम्—परमात्मानं प्रकृत्येकोपाधिम्", उत्तरवाक्ये "पुरुषम्—पूर्णं निरुपाधिम्" इति टीकानुसारेण च, पूर्णः पुरुषोऽत्र स्वयं भगवानेवोच्यते ॥

पूर्वमिति पाठे "पूर्वमेवाहमासम्" इति, "तत्पुरुषस्य पुरुषत्वम्" इति,

---

वैद्याभूषणी ।

पाठान्तरेणापि स एवार्थ इति व्याख्यातुमाह—पूर्वमिति । ईश्वर-

राधामोहनी ।

पुरुषः—पुरुषपदबोध्यः, प्रकृत्युपाधिमिति पुरुषपदेन वैराजस्यापि बोधनात् । परशब्दसमभिव्याहृतपुरुषपदेनात्र प्रकृत्युपाधेरीश्वरस्य ग्रहणमिति भावः । कामनाभेदेन अधिकारिभेदेन भजनीयभेदस्य प्रकृतत्वात् पूर्ववाक्यस्थपुरुषपदार्थभेदाय तदुत्तरवाक्यस्थपुरुषपदार्थविवरणं टीकाकारोक्तं दर्शयति—'पुरुषं पूर्णं निरुपाधिम्' इति । तत्र पुरुषमिति—उत्तरवाक्यस्थपुरुषपदविवरणम् । तद्वाक्यस्थपरशब्दस्यापि ग्राहकम् । तेन 'परम्' इत्यस्यार्थः 'पूर्णम्' इति, 'पुरुषम्' इत्यास्यार्थः 'निरुपाधित्वम्' इति—उपाधिः प्रकृतिः, तद्रहितम् । तत्र पुरुषपदार्थतावच्छेदकं न निरुपाधित्वम्, किन्तु पुरुषत्वम् "पुरि शेते पुरुषः" इति व्युत्पत्त्या शरीरविशेषावच्छिन्नचेतनत्वरूपम् । शरीरं च प्रकृतिप्राकृताप्राकृतभेदेन त्रिविधमिति त्रिविध एव पुरुषपदार्थः । तत्र च पूर्णार्थक'पर'पदसमभिव्याहारेणाऽप्राकृतशरीरः स्वयं भगवान् लब्ध इति सूचनाय 'निरुपाधिम्' इत्युक्तम् । न च निरुपाधिमिति टीका निर्विशेषब्रह्मपरेति वाच्यम्, यजेतेत्यनुपपत्तेः । निर्विशेषस्य 'यजि देवपूजायाम्' इत्युक्तयजनासम्भवादिति भावः ॥

"तत पूर्वमेवाऽहमासम्" इति श्रुतिप्रतीकस्य पूर्वं सृष्टेः पूर्वम्, प्रलयेऽहमेवासमित्यर्थः । तत् सृष्टिपूर्वकालसत्त्वम्, पुरुषत्वं पुरुषपदप्रवृत्तिनिमित्तं पुरुषसम्बन्धीत्यपरश्रुतिप्रतीकार्थः । तथा च सृष्टिप्राक्कालसत्तावद्रूपावच्छिन्नः स्वयं भग-

श्रौतनिर्वचनविशेषपुरस्कारेण च स एवोच्यते । तमपश्यत् श्रीवेदव्यास इति स्वरूपशक्तिमन्तमित्येतत् स्वयमेव लब्धम्; पूर्ण* चन्द्रमपश्यदित्युक्ते कान्तिमन्तपश्यदिति लभ्यते । अत एव

"त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ।
मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥"
( भा० १।७।२३ )

वैद्याभूषणी ।

स्यैव पूर्ववर्त्तित्वात् पुरुषमित्यर्थः । स एवेति स्वयं भगवानेव । स्वरूपशक्तिमत्त्वे प्रमाणमाह—त्वमिति । श्रुतिश्चाऽत्रास्ति—"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (श्वे० ६।८) इति । एषैव ह्लादिनी सन्धिनीत्यादिना स्मर्यते । इत्युक्तमिति कण्ठतः पठि-

राधामोहनी ।

वानेव पुरुषपदमुख्यार्थः, तत्रैव "पुरि शरीरे शेते" इति "पुरा आसीत्" इति व्युत्पत्तिद्वयसिद्धपुरुषपदप्रवृत्तिसत्त्वादिति । स्वरूपशक्तिमन्तमिति ।

"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥"

इत्युक्तेस्तस्य शक्तिमत्त्वस्य स्वाभाविकत्वात् प्रत्यक्षात्मकतज्ज्ञाने स्वाभाविकशक्त्यादेरप्यवश्यम्भावादिति भावः । प्रकृतेः पर इति प्रकृतेरन्तर्बहिर्वर्त्तमानोऽपि प्रकृत्याश्रयोऽपि च प्रकृत्यनासङ्गः, पद्मपत्रजलमिवेत्यर्थः । कथमसङ्गत्वम् ? इत्यत आह—'मायां व्युदस्य' इति, आवरणशक्तिनिराकरणेन तटस्थीकृत्य, चिच्छक्त्या चिन्मयशक्त्या, कैवल्ये—सुखमये, आत्मनि—स्वस्वरूपे देहे स्थित इति । तथा च

* 'अत एव पूर्णम्' इति पाठान्तरम् ।

इत्युक्तम् । अत एव "मायाञ्च तदपाश्रयाम्" इत्यनेन तस्मिन्नप—अपकृष्ट आश्रयो यस्याः; निलीय स्थितत्वादिति मायाया न तत्स्वरूपभूतत्वमित्यपि लभ्यते । वक्ष्यते च—

"माया परैत्यभिमुखे च विलज्जमाना" इति । स्वरूपशक्तिरियमत्रैव व्यक्तीभविष्यति—

"अनर्थोपशमं साक्षाद् भक्तियोगमधोक्षजे"

---

वैद्याभूषणी ।

तमर्ज्जुनेनेत्यर्थः । मायातोऽन्येयं बोध्येत्याह—अत एवेत्यादिना । मूलवाक्येन स्वरूपभूता चिच्छक्तिरियं बाधिताऽस्तीत्याह—स्वरूपेत्यादिना । पट्टमहिषीव स्वरूपशक्तिः, बहिर्द्वारसेविकेव मायाशक्तिरित्युभयोर्महदन्तरं बोध्यम् । भगवद्भक्तेर्भगवद्गुणानाञ्च स्वरूपशक्तिसारांशत्वं

राधामोहनी ।

जीवा मायाकृतावरणेन तिरोहितज्ञानाः प्रकृत्यासक्ताः, न त्वयं तथेत्यर्थः । परैति निलीय तिष्ठति । पूर्वत्र 'अनर्थोपशमम्' इति श्लोके, असौ अनर्थोपशमत्वरूपभक्तिः, स्वरूपशक्तिवृत्तित्वेनैव—भक्तेः स्वरूपभूतचिच्छक्तिसारांशत्वेनैव । परत्र 'आत्मारामाश्च' इति श्लोके, ब्रह्मानन्दस्य ब्रह्माकारमनोवृत्तिविषयसुखस्य, उपरिचरतया तदधिकसुखविषयतया, परमवृत्तितां सारांशवृत्तितामर्हतीति । तथा चैतादृशभक्त्यधिष्ठितमनोवृत्तिरेव प्रेमाख्या भक्तिर्भगवन्तं विषयीकरोति । मनोवृत्तिश्च मनःपरिणामविशेषात्मकं ज्ञानमात्मनिष्ठधर्मः, मनःसहकृतात्मजन्य आत्मनिष्ठ एव वा धर्मः । उक्तं च रसामृतसिन्धौ—

"आविर्भूय मनोवृत्तौ व्रजन्ती तत्स्वरूपताम् ।
कृष्णादिकर्मकास्वादहेतुत्वं प्रतिपद्यते ॥" इति ।

इत्यनेन, "आत्मारामाश्च" इत्यनेन च । पूर्वत्र हि भक्तियोग-प्रभावः खल्वसौ मायाभिभावकतया स्वरूपशक्तिवृत्तित्वेनैव गम्यते, परत्र च ते गुणा ब्रह्मानन्दस्याप्युरिचरतया† स्वरूपशक्तेः परमवृत्तितामेवार्हन्तीति । मायाधिष्ठातृपुरुषस्तु तदंशत्वेन, ब्रह्म च तदीयनिर्विशेषाविर्भावत्वेन‡, तदन्तर्भावविवक्षया|| पृथङ्नोक्ते इति ज्ञेयम् । §अतोऽत्र पूर्ववदेव सम्बन्धितत्त्वं निर्द्धारितम् ॥

वैद्यासूपणी ।

सयुक्तिकमाह—पूर्वत्र हीत्यादिना । ब्रह्मानन्दस्येति । अनभिव्यक्त-संस्थानादिविशेषस्येति बोध्यम् । ननु परमात्मरूपस्तादृशब्रह्मरूपश्चा-विर्भावः कुतो व्यासनेन न दृष्ट इति चेत् , तत्राह—मायाधिष्ठात्रिति ॥

राधामोहनी ।

तदीयनिर्विशेषाविर्भावरूपत्वेन—शरीरानवच्छिन्नस्वरूपभूतज्ञानसुखादिमत्त्वेन । तदन्तर्भावेण—तद्रूपत्वेन, अपृथग्दृष्टत्वात्—अभिन्नत्वात्, विशेष्यनिर्विशेषं शरीरा-दिविशेषाविषयकमाविर्भवतीति निर्विशेषप्रकाशं ज्ञानसुखात्मकं यद्रूपं स्वरूपम् , त-दीयम्—भगवदीयम् । तद्भिनेति । अपृथग्दृष्टत्वात्—पृथग्दर्शनाभावाद् विशेष्यस्य शरीरिणः शरीरमपुरस्कृत्य, ब्रह्मपदवाक्यत्वादिति भावः । यद्वा, निर्विशेषे आविर्भावो

† 'उपरिवर्त्तितया' इति च पाठान्तरम् ।

‡ 'अविर्भावरूपत्वेन' इति राधामोहनीसम्मतः पाठः ।

|| 'तदन्तर्भावेणापृथग् दृष्टत्वात् पृथग् नोक्ते' इत्येवंपाठो राधामोहनीसम्मतः ।

§ 'तदेतद् द्वितीयतृतीयसन्दर्भयोः सुष्ठु सम्पत्स्यते' क्वचिदित्यधिकः पाठः ।

अथ प्राक्प्रतिपादितस्यैवाऽभिधेयस्य प्रयोजनस्य च स्थापकं जीवस्य स्वरूपत एव परमेश्वराद् वैलक्षण्यमपश्यदित्याह–ययेति। यया मायया सम्मोहितो जीवः स्वयं चिद्रूपत्वेन त्रिगुणात्मकाद् जडात् परोऽप्यात्मानं त्रिगुणात्मकं जडं देहादि-सङ्घातं मनुते, तन्मननकृतमनर्थं संसारव्यसनश्चाऽभिपद्यते।

---

दैद्याभूषणी।

जीवो येनेश्वरं भजेत् भक्त्या च तस्मिन् प्रमाणं विन्देत्ततो मायया विमुक्तः स्यात्, तमीश्वराद् जीवस्य वास्तवं भेदमपश्यदिति व्याचष्टे—अथ प्रागित्यादिना। जीवस्येति। वैलक्षण्यमिति—सेवकत्वसेव्यत्वाणुत्व-विभुत्वरूपनित्यधर्महेतुकं भेदमित्यर्थः। ननु चिन्मात्रो जीवः "यो विज्ञाने तिष्ठन् (बृ० ३।७।२२) "यज्ञं तनुते" (तै० २।५।१) इत्यादौ चिद्धेतुत्वश्रवणात्, न तस्य धर्मभूतं नित्यं ज्ञानमस्ति, येन मोहमनने वर्णनीये। तस्मात्, "सत्त्वात् सञ्जायते ज्ञानम्" (गी० १०। १७) इत्यादिवाक्यात् सत्त्वे या चेतनस्य छाया, तदेव सत्त्वोपहितस्य

राधामोहनी।

यस्य सः, तदीयो विशेषस्तत्त्वेनेति। अथवा निर्विशेषो विशेषाकाररहितो य आविर्भावः ज्ञानम्, तदात्मको यस्तदीयो विशेषस्तत्त्वेनेति। सम्बन्धितत्त्वम्—एतद्ग्रन्थतात्पर्यविषयप्रतिपत्तिविषयतत्त्वम्॥

अभिधेयस्य साधनभक्तेः। प्रयोजनस्य प्रेमसेवायाः स्थापकमिति, जीवपरमेश्वरयोर्भेदे तयोरुपपत्तेरिति भावः। चिद्रूपम्—चेतनम्। परोऽपि—भिन्नोऽपि मनुते—आत्मत्वेन जानाति, तज्ज्ञाने भ्रमरूपे दोषविशेषतया मायैव हेतुरिति

तदेवं जीवस्य चिद्रूपत्वेऽपि, यया सम्मोहित इति मनुत इति च स्वरूपभूतज्ञानशालित्वं व्यनक्ति, प्रकाशैकरूपस्य तेजसः स्वपर-प्रकाशनशक्तिवत्—

"अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः" ( गी० ५।१५ ).

इति श्रीगीताभ्यः । तदेवं उपाधेरेव जीवत्वम्, तन्नाशस्यैव

---

वैद्याभूषणी ।

तस्य ज्ञानम्, येन मोहमनने व्यासेन दृष्टे स्यातामिति चेत्, तत्राह— तदेवमित्यादिना । छायाभावाच्च न तत्कल्पनं युक्तमिति भावः ।

ननु स्वरूपभूतं ज्ञानं कथमिति चेत् ? तत्राह—प्रकाशैकेति । अहिकु-ण्डलाधिकरणे भाषितमेतद् द्रष्टव्यम् । तृतीयसन्दर्भे विस्तरीष्याम एतत् । तदेवमुपाधिरिति । 'अन्तःकरणं जीवः, अन्तःकरणनाशो जीवस्य मोक्षः इति शङ्करमते दूषितम् । तथा सति परोऽपीत्यादिव्याकोपादिति

राधामोहनी ।

भावः । अनर्थम्—रूपादिविषयग्रहणम् । संसारव्यसनम्—पुनः पुनः शरीरसम्बन्धे हेतुः धर्माधर्मसुखदुःखादिकम् । स्वरूपभूतज्ञानशालित्वमिति । एतेन विषयसम्ब-न्धरहितस्य परमेश्वरसाक्षात्कारसुखानुभवो भवतीति सूचितम् । तत्—तस्माद् आ-त्मन एव सुखदुःखादिमत्त्वादिति यावत् । जीवत्वम्—ज्ञानसुखदुःखादिमत्त्वम् । मो-क्षत्वम्—आत्यन्तिकदुःखनिवृत्तिसाधनत्वम् । न मोक्षपदवाच्यत्वम् । परिहृतवा-निति । नित्यसुखसाक्षात्कारस्य स्वतः प्रयोजनतया मोक्षत्वात् तस्य नित्यचेतना-त्मन्येव सम्भवात् तादृशमोक्षकामे दुःखनिवृत्तेरप्यवश्यम्भावात्, दुःखनिवृत्तौ सुख-स्याऽवश्यम्भावात् न दुःखनिवृत्तेः स्वतः प्रयोजनत्वम् । उपाधिनाशस्यापि स्वतो ने-च्छाविषयत्वमिति, आत्मनि नित्यसुखाभ्युदयस्यैव मोक्षत्वम्, उपाधेश्चाऽनित्यत्वात्

मोक्षत्वमिति मतान्तरं परिहृतवान्। अत्र यया सम्मोहित इत्यनेन तस्या एव तत्र कर्त्तृत्वम्, भगवतस्तत्रोदासीनत्वं मतम्। वक्ष्यते च—

विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया ।
विमोहिता विकत्थन्ते ममाऽहमिति दुर्धियः ॥

( भा० २।५।१३ ) इति ।

अत्र विलज्जमानयेत्यनेनेदमायाति—तस्या जीवसम्मोहनं कर्म श्रीभगवते न रोचते इति यद्यपि सा स्वयं जानाति, तथापि—"भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य" (भा० ११।२।३७)

---

वैद्याभूषणी ।

भावः। अत्रेति। तत्र जीवमोहने कर्मणि। तस्या मायायाः। विलज्जेति—ब्रह्मवाक्यम्। अमुया मायया। असहमानेति। दास्या

राधामोहनी ।

तदसम्भव इति भावः। ब्रह्मणः कृष्णस्वरूपत्वं च। तस्या एव प्रकृतेरेव, कर्तृत्वम्—जीवसम्मोहकत्वम्। तत्र जीवसम्मोहने। वक्ष्यते चेति। मायाया एव मोहकत्वम्, न तु भगवत इति शेषः। विलज्जमानयेति। यस्य भगवत ईक्षापथे स्थातुं विलज्जमानया अमुया मायया विमोहिता जीवा विकत्थन्ते इत्यन्वयः। किम्भूताः पुत्रादौ 'मम' इति, शरीरे 'अहम्' इति दुर्धियः सन्तः, विकत्थनं संसारव्यसनेनेति। लज्जा च भगवत्सङ्गिचिच्छक्तिमपेक्ष्य निकृष्टत्वेन। तथा च भगवदनुमतिं विनैव जीवसम्मोहः क्रियते इति भावः। भावार्थमाह—अत्रेति, स्वयं जानातीति जीवसम्मोहने भगवदनभिरुचिम्। भयम्—बाध्यबाधकतानिबन्धनम्, द्वितीयाभिनिवेशतः—देहाभि-

इति दिशा जीवानामनादिभगवदज्ञानमयवैमुख्यमसहमाना स्व-रूपावरणमस्वरूपावेशञ्च करोति ॥

श्रीभगवांश्चाऽनादित एव भक्तायां प्रपञ्चाधिकारिण्यां तस्यां दाक्षिण्यं लङ्घितुं न शक्नोति । तथा तद्भयेनापि जीवानां

---

वैद्याभूषणी ।

उचितमेतत् कर्म , यत् स्वामिविमुखान् दुःखीकरोतीति । ईशवैमुख्येन पिहितं जीवं माया पिधत्ते, घटेनाऽऽवृतं दीपं यथा तम आवृणोतीति ॥

नन्वीश्वरः कथं तन्मोहनं सहते ? तत्राह—भगवांश्चेति । तर्हि कृपालुताक्षतिः, तत्राह—तथेति । तद्भयेनापीति । मायातो यज्जीवानां

राधामोहनी ।

मानतः, ईशादपेतस्य—ईशविमुखस्य । इति दिशा—इतिदिग्दर्शनेनेति । अस्वरू-पावेशम्—देहावेशम् ॥ ३२ ॥

प्रपञ्चाधिकारिण्यां प्रपञ्चसृष्ट्यादौ नियुक्तायाम् , दाक्षिण्यम्—साक्षादनुग्रहम् , जीवसम्मोहने स्वातन्त्र्यं न शक्नोतीति । तथा च करुणया भगवता स्वयं जीवस-म्मोहनाशने मायायाः अद्यनाभङ्गो (?) भवतीति न तत्कृतमिति भावः । ननु यदि जीवसम्मोहने भगवदनभिप्रायस्तदा कथं प्रपञ्चसृष्ट्यादौ नियोगः जीवभोगार्थमेव त-न्नियोगादिति चेत् , न;

"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः ।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥" ( भा० १०।८७।२ )

इति दशमोक्तपद्येन जनानां धर्मार्थकाममोक्षार्थं भगवतः प्रपञ्चसृष्टिबोधनात् । न तु जीवानां सम्मोहनार्थमपि नियोग इति भावः । तद्भयेनापि मायाभयेनापि । यद्वा, जीवानां मायाकृतभयेनापि—मायाकृतदर्शनेनापि इति यावत् । स्वसाम्मुख्यं

स्वसाम्मुख्यं वाञ्छन्नुपदिशति—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥"

( गी० ७।१४ )

"सतां प्रसङ्गाद् मम वीर्यसंविदो ।
भवन्ति हृत्कर्णरसायनाः कथाः ॥
तज्जोषणादाश्वपवर्गवर्त्मनि ।
श्रद्धा रतिर्भक्तिरनुक्रमिष्यति" ॥

( भा० ३।२५।२५ ) इति ।

लीलया श्रीमद्व्यासरूपेण तु विशिष्टतया तदुपदिष्टवानित्यनन्तरमेवाऽऽयास्यति—अनर्थोपशमं साक्षादिति । तस्माद् द्वयो-

---

वैद्याभूषणी ।

भयं तेनापि हेतुनेत्यर्थः । ततश्च न तत्क्षतिरित्यर्थः । दैवीति । प्रपत्तिश्चेयं सत्प्रसङ्गहेतुकैव तदुपादिष्टा, यथा साम्मुख्यं स्यात्, "तद्विद्धि प्रणिपातेन" इत्यादितद्वाक्यात्, सतां प्रसङ्गादित्याद्यग्रिमवाक्याच्च । लीलयेति—लीलावतारेण । विशिष्टतयेति । आचार्यरूपेणत्यर्थः ।

राधामोहनी ।

वाञ्छन्नित्यर्थः । उपदिशतीति करुणयेत्यादि । व्यासोपदेशं दर्शयति—अनर्थोपशमं साक्षादितीति । अनर्थोपशमं साक्षादित्यादीत्यर्थः । तस्मात्—भजनोपदेशात्, द्व-

रपि तत्तत् समञ्जसं ज्ञेयम् । ननु माया खलु शक्तिः, शक्तिश्च कार्यक्षमत्वम्, तच्च धर्मविशेषः, तस्यां कथं लज्जादिकम् ?

---

सर्वसंवादिनी ।

तस्मादिति । द्वयोर्मायाभगवतोरपि । तत्तदिति । मोहनं साम्मुख्य-वाञ्छा चेत्यर्थः । ननु मायाया मोहनलज्जनकर्तृत्वमुक्तम्, तत् कथं जडायास्तस्याः सम्भवेदिति शङ्कते, ननु मायेति । धर्मविशेष उत्साहा-

राधामोहनी ।

योरेव—मायाजीवयोरेव, समञ्जसम्—समानम्, मायाया अधिकारस्थापनेन जीवस्य भयनिवृत्त्या चेति भावः । एवम्—मायाया धर्मत्वे । भगवतीत्याधारे सप्तमी । तथा च भगवन्निष्ठानां तासां शक्तीनामित्यर्थः । संवाद इति । मायाया अधिष्ठातृदेव्यभावे तया सहेन्द्रस्य मिथः कथनरूपसंवादासम्भव इति भावः ।

"विष्णोर्माया भगवती यया सम्मोहितं जगत्" (भा० १०।१।२५)इति,

"प्रकृतिस्त्वञ्च सर्वस्य जगत्त्रयहितैषिणी"

इत्यादि बहुतरं प्रमाणमस्तीति बोध्यम् । अथ जडानां क्षित्यादिकार्याणामुपादानतया जडायाः प्रकृतेः सिद्धिरिति तस्य जडत्वेन स्वतोऽक्षमतया तत्प्रवर्तकस्य चेतनपरमेश्वरस्य सिद्धिः । तदुक्तम्—"स ऐक्षत" ( ऐ० १, १, १, ) "बहु स्याम्" ( छा० ६, २, ३ ) इत्यादिश्रुतिभिस्तस्या अधिष्ठातृदेवीत्वस्वीकारे तयैव सृष्ट्यादिसम्भवे किमीश्वरकल्पनयेति,

"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः"

इत्यादिवचनविरोधश्चेति चेत्, न;

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥" (श्वे० ४,५)

उच्यते—एवं सत्यपि भगवति तासां शक्तीनामधिष्ठातृदेव्यः श्रू-

---

वैद्याभूषणी ।

दिवदित्यर्थः । सिद्धान्तयति—उच्यते इति । अधिष्ठातृदेव्य इति । विन्ध्यादिगिरीणां यथाऽधिष्ठातृमूर्त्तयस्तद्वत् । केनेति । तस्याम्, "ब्रह्म ह देवेभ्यो विजिग्ये" इत्यादि वाक्यमस्ति । "तत्राऽग्निवायुमघोनः

राधामोहनी ।

इति सर्वप्रमाणवरीयस्या श्रुत्या प्रकृतिभोक्तुरात्मनोऽजत्वेन प्रतिपादनात्। प्रकृतिवैशिष्ट्यपुरस्कारेणाऽऽत्मबोधकतायामेव स्त्रीलिङ्गप्रयोगात् आत्ममात्रबोधकत्वेन 'अजः' इति पुँल्लिङ्गप्रयोगः । अन्यः अजः—परमेश्वरः सर्वव्यापकतया प्रकृत्यन्तरस्थोऽपि भुक्तभोगाम्—कृतनियमलक्षणभोगां तां जहाति नात्मत्वेनाऽभिमन्यते । एतद्योगाभिप्रायेणैव श्रीमच्छङ्कराचार्यचरणैरानन्दलहर्यां दुर्गायाः परमब्रह्ममहिषीत्वमुक्तम् । अन्तर्यामितया प्रकृतौ प्रवेशाभिप्रायेणैव कारणोपाधिरीश्वर इत्युक्तम्, सुखदुःखमोहस्वभावसत्त्वरजस्तमोगुणमयप्रकृत्यभिमानदेवतायाः स्वतन्त्रतानुपपत्त्या शुद्धसत्त्वाख्यचिन्मयसुखमयशरीरस्वतन्त्रस्य लोकवत्तु लीलाकैवल्यन्यायेन नित्यलीलास्पदस्य सर्वनियन्तृतया सिद्धिः, लीलानुरोधेन नित्यधामतत्परिकराणां सिद्धिः तादृशधामादिकं चिच्छक्त्याख्यपरशक्तिविलास एव, चिच्छक्त्यधिष्ठात्री देव्यपि वर्त्तते, सा च राधाख्या सच्चिदानन्दमयी अचिन्त्या भगवल्लीलोपयोगिनीति भगवद्भक्तानां भजनसिद्धानां नित्यसिद्धानां च चिच्छक्तिविलासरूपाणि शरीराणीति दिक् ।

अत्रायमद्वैतवादिनां सात्वतानां निष्कर्षः—अद्वयं ज्ञानं ब्रह्म, तदेव प्रकृत्युपाधिरीश्वरः परमात्मा च । प्रकृतिश्च सत्त्वरजस्तमोगुणमयी सत्त्वप्रधाना, तस्याः समग्रसत्त्वांशोपाधिर्वासुदेवः, समुदितरजोगुणोपाधिर्ब्रह्मा, तमोगुणोपाधिः शिव इति मूर्तित्रयम् । तदुक्तम्—

यन्ते । यथा केनोपनिषदि महेन्द्रमाययोः संवादः । तदास्ताम्, प्रस्तुतं प्रस्तूयते ॥

वैधाभूषणी ।

सगर्वान् वीक्ष्य तद्गर्वमपनेतुं परमात्माविरभूत् । तमजानन्तस्ते जिज्ञासयामासुः । तेषां वीर्यं परीक्षमाणः स तृणं निदधौ । सर्वं दहेयमित्यग्निः, सर्वमाददीयेति वायुश्च ब्रुवंस्तान्निर्दग्धुमादातुञ्च नाशकत् । ज्ञातुं प्रवृत्तान्मघोनस्तु स तिरोधत्त । तदाकाशे मघवा हैमवतीमुमामाजगाम, किमेतदिति पप्रच्छ । सा च 'ब्रह्मैतत्' इत्युवाच" इति निष्कृष्टम् ॥

राधामोहनी ।

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः" ( भा० १।२।२३) इत्यादि । तत्र परः पुरुषः—प्रकृत्युपाधिरीश्वरः । तत्र च वासुदेवस्य सङ्कर्षणाख्यपुरुषः प्रथमोऽवतारः, सङ्कर्षणस्य प्रद्युम्नः, तस्य चाऽनिरुद्ध इति व्यूहचतुष्टयम् । तदुक्तम्—

"एकमेवाऽद्वयं ब्रह्म मायया तच्चतुष्टयम्" । इति ।

वासुदेवस्य लीलाविग्रहो वैकुण्ठनाथो नारायणो भगवानिति । स च वासुदेवः सङ्कर्षणाख्येनांशेन प्रकृतिक्षोभेण महत्तत्त्वादिक्रमेण विश्वं ससृजे ।

"स एवेदं ससर्जाग्रे भगवानात्ममायया ।
सदसद्रूपया]चासौ गुणमय्याऽगुणो विभुः ॥" इति ।

तत्र महत्तत्त्वादिक्रमेण हिरण्यगर्भः सूक्ष्मसमष्ट्यात्मकः, ततः स्थूलरूपो वैराजः रजोगुणप्रधानतया ब्रह्मणः स्थूलसूक्ष्मरूपावेतौ, ब्रह्मणो लीलाविग्रहश्चतुराननः । शिवस्य च लीलाविग्रहा एकादश विज्ञेयाः । वासुदेवस्य च लीलाविग्रहाः

"स एव प्रथमं देवः कौमारं सर्गमास्थितः ।" ( भा० १।३।६ )

इत्यादिना दर्शिताः । तेषु च केचित् सङ्कर्षणस्य चांशाः, केचिच्च तत्कलाः, कृ-

तत्र जीवस्य तादृशचिद्रूपत्वेऽपि परमेश्वरतो वैलक्षण्यम्—

वैद्याभूषणी ।

तत्र जीवस्येति । "मायाञ्च तदपाश्रयाम्" इतीश्वरस्य मायानियन्तृत्वम्, "यया सम्मोहितो जीवः" इति जीवस्य मायानियम्यत्वञ्च । तेन स्वरूपत ईशाज्जीवस्य भेदपर्यायं वैलक्षण्यं दृष्टवानिति प्रस्फुटम् । 'अपश्यद्' इत्यनेन कालोऽप्यानीतः । तदेवमीश्वरजीवमायाकालाख्यानि चत्वारि तत्त्वानि समाधौ श्रीव्यासेन दृष्टानि । तानि नित्यान्येव,

राधामोहनी ।

ष्णस्तु भगवान् स्वयं नारायण एवावतीर्णः, तदुक्तम्—

"एते चांऽशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।" (भा० १।३।२८) इति । अत्र स्वामिटीका—" तत्र मत्स्यादीनामवतारत्वेन सर्वज्ञत्वसर्वशक्तिमत्त्वेऽपि यथोपयोगमेव ज्ञानक्रियाशक्त्याविष्करणम् । कुमारनारदादिष्वाधिकारिकेषु यथोपयोगमंशकलावेशः, कृष्णस्तु भगवान्नारायण एव, आविष्कृतसर्वशक्तिमत्त्वात्" इति । प्रकृतिश्च मायाशक्तिर्विश्वावरिका तदुपाधिर्दुर्गा, लक्ष्मीस्तु शुद्धसत्त्वांशोपाधिरिति ॥

जीवेश्वरयोर्देहसम्बन्धे वैलक्षण्यं द्वितीयस्कन्धे नवमाध्याये टीकायामाह—"अयं भावः—जीवस्याऽविद्यया मिथ्यादेहसम्बन्धः, ईश्वरस्य तु योगमायया चिद्घनलीलाविग्रहाविर्भाव इति महान् विशेषः" इति । मायाकृतावरणेन मिथ्यादेहसम्बन्धः कार्यदेहाभिमानम्, योगमायया चिच्छक्त्या तिरस्कृतमायया चिद्घनलीलाविग्रहे आविर्भावो न तु तदभिमानम्, विग्रहस्य चिन्मयत्वं शुद्धसत्त्वरूपत्वेन नियतज्ञानाविर्भावकत्वमिति । यद्वा, योगमायया योगाख्यमायया स्वेच्छयेति यावत् ।

तदपाश्रयामिति , यया सम्मोहित इति च दर्शयति ॥

वैद्याभूषणी ।

"अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा कालः" इत्येवं भाल्लवेयश्रुतेः,

"नित्यो नित्यानाञ्चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" (क० २।५।१३) इति काठकात्,

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां स्वरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः"
(श्वे० ४।५) इति श्वेताश्वतराणां मन्त्राच्च;

राधामोहनी ।

तदुक्तम्—"स्वेच्छामयस्य" इति, स्वेच्छा—स्वीयेच्छा, तन्मयस्य—तदनुरूपशरीरस्य, न त्वदृष्टाकृष्टशरीरस्येति ।

"आत्ममाया तदिच्छा स्याद् गुणमाया जडात्मिका ।"

इति वचनाच्च । एवम्—"अक्षय्यं हि* चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिश्रुतौ यथाऽक्षय्यपदस्य "इह कर्मजितो लोकः क्षीयते, अमुत्र पुण्यजितो लोकः क्षीयते" इत्यादिन्यायानुगृहीतश्रुत्या बलवत्या बाधेन कल्पपर्यन्तस्थायिपरता, तथा "यत् सावयवं तदनित्यम्" "यद् दृश्यं तदनित्यम्" इत्यादिन्यायानुगृहीतया बलवत्या

"चिन्मयस्याऽद्वितीयस्य निष्कलस्याऽशरीरिणः ।
उपासनार्थं लोकानां ब्रह्मणो रूपकल्पना ॥"

"आकाशवत् सर्वगतं सुसूक्ष्मम्" 'अपाणिपादो जवनो ग्रहीता" ।

---

*ह वै इति वा पाठः ।

वैद्याभूषणी ।

"अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥
प्रधानं पुरुषञ्चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥
अव्यक्तं कारणं यत्तत् प्रधानमृषिसत्तमैः ।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥
अनादिर्भगवान् कालो नान्तोऽस्य द्विज ! विद्यते ।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥"

इति श्रीवैष्णवाच्च ।

तेष्वीश्वरः शक्तिमान् स्वतन्त्रः, जीवादयस्तु तच्छक्तयोऽस्वतन्त्राः,

"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ।
अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥"

इति श्रीवैष्णवात् ।

राधामोहनी ।

"अरूपमस्पर्शम्" "निष्क्रियं निरञ्जनम्" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि-श्रुत्या बाधेन ।

"नित्यां मे मथुरां विद्धि विद्धि वृन्दावनं तथा ।"
"साक्षाद् ब्रह्म गोपालपुरी"
"नित्यावतारो भगवान् नित्यमूर्तिर्जगत्पतिः ।"
"सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः ॥"
"अनादिरादिर्गोविन्दः सच्चिदानन्दविग्रहः ।"

वैद्याभूषणी ।

"स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद् भुवि" (भा० १०।१।२२) इति श्रीभागवताच्च । तत्र विभुविज्ञानमीश्वरः, अणुविज्ञानं जीवः । उभयम्—नित्यज्ञानगुणकम् । सत्त्वादिगुणत्रयविशिष्टं जडं द्रव्यं माया । गुणत्रयशून्यं भूतवर्त्तमानादिव्यवहारकारणं जडं द्रव्यं तु कालः । कर्म्माप्यनादि विनाशि चाऽस्ति; "न कर्म्माविभागात् इति चेन्नानादित्वात्" (ब्र० सू० २।१।३५) इति सूत्रादिति वस्तुस्थितिः श्रुतिस्मृतिसिद्धा वेदितव्या ॥

राधामोहनी ।

इत्यादिवचनानामन्यार्थपरता कल्प्यत इति । अत्रोच्यते—यथा प्रपञ्चोपादानत्वेन सिद्धा प्रकृतिरनिर्वचनीया सावयवा नित्या प्रत्यक्षगम्या सिद्ध्यति, तस्या अनित्यत्वे तदुपादानस्याऽऽवश्यकत्वे पुनरनवस्था स्यात्, निरवयवत्वेन परिणामासम्भव इति, तथा प्रकृतिप्रवर्तकतया सिद्धस्य चेतनस्याऽशरीरत्वे इष्टत्वानुपपत्तिरिति । तच्छरीरस्याऽनित्यत्वे तत्कारणशरीराङ्गीकारे पुनरनवस्था स्यादिति नित्यशरीरसिद्धिः । तथा "लोकवत्तु लीलाकैवल्यम्" (ब्र० सू० २।१।३३) इति न्यायेन तद्धामादिकमप्राकृतं सिद्ध्यतीति । वैकुण्ठधाम्नस्तथात्वमाह द्वितीयस्कन्धे—

"तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामास पदं न यत्परम् ।
व्यपेतसंक्लेशविमोहसाध्वसं स्वदृष्टवद्भिः पुरुषैरभिष्टुतम् ॥
प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुताऽपरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥" (भा०२।९।९,१०)

इति । तस्मै—ब्रह्मणे । एवं वृन्दावनादिकमपि नित्यधाम कृष्णसन्दर्भादौ वक्तव्यम् । परमानन्दस्य भगवतो यथा प्रयोजनमनपेक्ष्य सृष्टिलीलादौ प्रवृत्तिः, तथा निजपरिकरैः सह क्रीडादौ प्रवृत्तिः । तथोक्तं माध्वभाष्ये—

यद्यैव यदेकं चिद्रूपं ब्रह्म मायाश्रयतावलितं विद्यामयम्, तद्यैव तन्मायाविषयतापन्नमविद्यापरिभूतञ्चेत्ययुक्तमिति जीवे-

वैद्याभूषणी ।

यत्तु "एकमेवाऽद्वितीयम्" (छा० ६।२।१) "विज्ञानमानन्दं ब्रह्म" (बृं० ३।९।२८) "नेह नानास्ति किञ्चन" (बृ० ४।४।१९) इत्यादिश्रुतिभ्यो निर्विशेषचिन्मात्राद्वैतं ब्रह्म वास्तवम्, अथ सदसद्विलक्षणत्वादनिर्व्वचनीयेन विद्याविद्यावृत्तिकेनाज्ञानेन सम्बन्धात्तस्माद्विद्योपाहितमीश्वरचैतन्यमविद्योपहितं जीवचैतन्यञ्चाऽभूत्, स्वरूपज्ञानेन निवृत्ते त्वज्ञाने न तत्रेश्वरजीवभावः, किन्तु निर्विशेषाद्वितीयचिन्मात्ररूपावस्थितिर्भवेदित्याह—मायी शङ्करस्तत्राह—यद्यैव यदेकमिति । विस्फुटार्थम् । इत्ययुक्तमिति । युगपदेवाकस्मादेवाज्ञानयोगादेकस्य भागस्य विद्याश्रयत्वमन्यस्याऽविद्यापराभूति-

राधामोहनी ।

"देवस्यैव स्वभावोऽयमाप्तकामस्य का स्पृहा ।"

इत्यादीति दिक् । वैलक्षण्यं विरुद्धधर्माध्यासेन भेदम्, इदं दर्शनक्रियाकर्म, "मायां च तदपाश्रयाम्" इत्यादि द्वयं कर्तृ ॥

तत्र "मायां च तदपाश्रयाम्" इत्यनेन परमेश्वरस्य मायाकृतमोहराहित्यम्, "यया सम्मोहितो जीवः" इत्यनेन जीवस्य मायामोहितत्वमित्युक्तमिति । मोहितत्वतदभावरूपविरुद्धधर्मयोरेकस्मिन्नसम्भवादीश्वरजीवयोर्भेदः सिद्ध इति दर्शयति—यदेकं चिद्रूपं ब्रह्मेति । मायाश्रयतेति मायाश्रयो हि मायामपेक्ष्य व्यापकतया मायाकृतमावरणरूपं तद्विषयत्वं नार्हति, अतो विद्यामयम्—अप्रतिरुद्धज्ञानम्, तेन देहाभिमानरूपाऽविद्याकृतविषयभोगादिपराभवं च नाप्नोतीति भावः । जीवेश्वर-

श्वराविभागोऽवगतः । ततश्च स्वरूपसामर्थ्यवैलक्षण्येन तद् द्वितयं मिथो विलक्षणस्वरूपमेवेत्यागतम् ॥

न चोपाधितारतम्यमयपरिच्छेदप्रतिविम्बत्वादिव्यवस्थया तयोर्विभागः स्यात् ॥

वैद्याभूषणी ।

रिति किमपराद्धं तेन ब्रह्मणा, येन विविधविक्षेपक्लेशानुभवभाजनताऽभूत् । पुनरप्याकस्मिकाज्ञानसम्बन्धस्य शक्यत्वाद्वक्तुमिति न तदुक्तरीत्या तद्विभागो वाच्यः, किन्तु श्रीव्यासदृष्टरीत्यैव सोऽस्माभिरवगत इत्यर्थः ॥

यत्तु "इन्द्रो मायाभिः पुरुरूप ईयते" (बृ०२।५।१९) इत्यादिश्रुतेस्तस्याद्वितीयस्य ब्रह्मणो मायया परिच्छेदादीश्वरजीवविभागः स्यात् । तत्र

राधामोहनी ।

विभागः—जीवेश्वरयोर्मिथो भेदः । ततश्चेति । मायाश्रयत्वादिमायामोहिताद्योर्मिथो विरोधाद् जीवेश्वरविभागाच्चेत्यर्थः । स्वरूपसामर्थ्यवैलण्येन स्वरूपयोः स्वाभाविकयोः मायानियन्तृत्वप्रयोजकसामर्थ्यमायाकृतावरणनिर्वर्त्तनाक्षमस्वसामर्थ्ययोर्वैलक्षण्येन, मिथो विलक्षणस्वरूपमेव तद् द्वितयम्–ईश्वरजीवोभयमित्यागतमित्यर्थः । भगवद्भजनकृतशक्त्या जीवानामपि मायानिरासात् 'स्वरूप' इत्युक्तम् ॥

अद्वैतवादिमतं निरस्यति—न चेति । उपाधिः—लिङ्गशरीरम्, तस्य तारतम्यम्—धर्माधर्मविशेषकृतसुखदुःखादिवैचित्र्यम्, तन्मयं तदध्यासेन विलक्षणत्वप्रयोजकम्, यत् परिच्छेदप्रतिविम्बत्वादि तद्व्यवस्थया ब्रह्मणि तत्कल्पनया । तयोः—जीवेश्वरयोः विभागः स्यात्—भेदव्यवहारः स्यादित्यर्थः । आदिना

वैद्याभूषणी ।

विद्यया परिच्छिन्नो महान् खण्डः 'ईश्वरः', अविद्यापरिच्छिन्नः कनीयान् खण्डस्तु 'जीवः' । यथा घटेनाऽवच्छिन्नः शरावेणावच्छिन्नश्चाकाश-खण्डो महदल्पताव्यपदेशं भजति ।

"यथा ह्ययं ज्योतिरात्मा विवस्वानपो भित्त्वा बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा" इत्यादिषु ब्रह्मणस्तस्य प्रतिबिम्बश्रवणात्तद्विभागः स्यात् । विद्यायां प्रतिबिम्ब

राधामोहनी ।

अपरिच्छिन्नत्वबिम्बत्वयोर्ग्रहः अत्रैव "न च" इत्यस्यान्वयः । एतन्मतपोषकं द्वादशस्कन्धवचनं यथा—

"नहि सत्यस्य नानात्वमविद्वान् यदि मन्यते ।
नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥" ( भा० १२।४।३० )

इति । अत्र स्वामिटीका—"ननु सत्यस्याऽप्यात्मनो जीवब्रह्मरूपनानात्वम-स्त्येव ? तत्राह—यद्येवं नानात्वं मन्यते तर्ह्यविद्वान् । कथं तर्हि तयोर्भेदव्यवहा-रः ? उपाधिकृतः । तत्राह—नानात्वमिति । तत्र च्छिद्रयोः, घटाकाशमहाकाश-योरिवेति परिच्छेदापरिच्छेदे दृष्टान्तः । ज्योतिषोः—जलस्थाकाशस्थसूर्ययोरिवेत्यु-पाधिकृतविकारसद्भावे, वातयोः—वाह्यशरीरस्थयोः वाय्वोरिवेति क्रियाभेदे दृष्टान्तः ।"

श्रुतिश्च—

"यथा ह्ययं ज्योतिरात्मा विवस्वानपो भित्वा बहुधैकोनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वयमजोऽयमात्मा ॥" इति ।

अयमर्थः—ज्योतिर्मयो विवस्वान् सूर्यः, एकः गगने स्थितः सन्नपि अपो-भित्वा अनुगच्छन्, बहुधा-नानारूपः प्रतीयते । कथं ? उपाधिना तत्तज्जलवृत्ति-त्वादिना, भेदरूपः भिन्न इव क्रियते । एवम्—एवं रूपेण, क्षेत्रेषु—स्थूलसूक्ष्मदेहेषु,

वैद्याभूषणी ।

ईश्वरः, अविद्यायां प्रतिविम्बस्तु जीवः । यथा सरसि रवेः प्रतिविम्बो यथा च घटे प्रतिविम्बो महदल्पत्वव्यपदेशं भजते, तद्वद्—इत्याह शङ्करः । तदिदं निरसनाय दर्शयति—न चेति । अनया रीत्या तयोर्विभागो न च स्यादित्यन्वयः ॥

राधामोहनी ।

अजोऽयमात्मेति । एतेनात्मन ऐक्यं श्रुतिसिद्धम्, नानात्वमौपाधिकमिति च । तत्र च मतद्वयम्—यथा घटाद्युपाधिना महाकाशविभागेनेव घटाकाशः क्रियते एवं देहेनात्मनो विभागेनेव जीवः पृथगिव क्रियते इत्येकं मतम् । मतान्तरं च सूर्यस्य जलवृत्तित्वरूपविलक्षणसम्बन्धेन प्रतिविम्बत्वम्, गगनवृत्तित्वेन बिम्बत्वम् । न च तत्र विम्बप्रतिबिम्बयोर्भेदः पारमार्थिकः, गगनस्थसूर्यस्यैव जलवृत्तित्वस्वीकाराद् जले सूर्यान्तरकल्पने गौरवान्मानाभावाच्च । न च जले चक्षुःसंयोगे कथं प्रतिविम्बप्रत्यक्षम्, सूर्ये चक्षुःसंयोगाभावात् ? इति वाच्यम्, जलस्य स्वच्छतया तत्र चक्षुषः संयोगे चक्षुरुच्छलितं गगनस्थसूर्ये लगति, तेन दोषवशान्मिथ्याजलवृत्तित्वमवगाह्य सूर्यप्रत्यक्षं जायत इति सिद्धान्तादिति । एवमन्तःकरणरूपोपाधौ ब्रह्मणः प्रतिबिम्बत्वलक्षण एकः सम्बन्धः, तेन जीवत्वम् । विम्बत्वलक्षणसम्बन्धश्चापरः, तेन परमात्मत्वमिति विलक्षणसम्बन्धद्वयं श्रुतिबलात् कल्प्यते । न च तन्मते ईश्वरपरिगृहीतशरीरेऽपि एतादृशसम्बन्धद्वयस्याऽऽवश्यकतया ब्रह्मविष्णुशिवादीनामपि जीवत्वं स्यात् इति वाच्यम्, प्रतिबिम्बत्वलक्षणदेहसम्बन्धं प्रति धर्माधर्मसंवलितलिङ्गशरीरस्य हेतुतया तदभावादेव शरीरिणोऽपीश्वरस्य जीवत्वाभावात् । ब्रह्मादीनां च स्थूलं सूक्ष्मं च शरीरं विलक्षणम्, न तु स्वादृष्टपरिगृहीतम्, किन्तु लोकादृष्टसहकारेण स्वेच्छया तत्तद्गुणमयमाविष्कृतम्, तत्र च केवलं बिम्बवत् सम्बन्ध इति ते न संसारिण इति संक्षेपः ॥

तत्र यद्युपाधेरनाविद्यकत्वेन वास्तवत्वम्, तर्ह्यविषयस्य तस्य परिच्छेदविषयत्वासम्भवः। निर्धर्म्मकस्य व्यापकस्य निर-

वैद्याभूषणी।

कुतो न वाच्य इति चेत्, अनुपपत्तेरेवेत्याह—तत्र यद्युपाधेरिति। परिच्छेदपक्षं निराकरोति—अनाविद्यकत्वेन रज्जुभुजङ्गवदज्ञानरचितत्वाभावेन वस्तुभूतत्वे सतीत्यर्थः। अविषयस्येति—"अगृह्यो नहि गृह्यते" ( बृ० ३।९।२६ ) इति श्रुतेः सर्वाप्रश्यस्य तस्य ब्रह्मण इत्यर्थः। इदमत्र बोध्यम्, न च टङ्कच्छिन्नपाषाणखण्डवद् वास्तवोपाधिच्छिन्नो ब्रह्मखण्डविशेष ईश्वरो जीवश्च, ब्रह्मणोऽच्छेद्यत्वादखण्डत्वाभ्युपगमाच्च, आदिमत्त्वापत्तेश्चेश्वरजीवयोः। यत एकस्य द्विधा त्रिधा विधानं छेदः। नाप्यच्छिन्न एवोपाधिसंयुक्तो ब्रह्मप्रदेशविशेष एव स सः, उपाधौ चलत्युपाधिसंयुक्तब्रह्मप्रदेशचलनायोगात्, प्रतिक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदादनुक्षणमुपहितत्वानुपहितत्वापत्तेः। न च कृत्स्नं ब्रह्मैवोपहितं स सः, अनुपहितब्रह्मव्यपदेशासिद्धेः। नापि ब्रह्माधिष्ठानम्, उपाधिरेव स सः, मुक्तावीशजीवाभावापत्तेरिति तुच्छः परिच्छेदवादः।

राधामोहनी।

एतन्मतद्वयोरपि क्रमेण दोषमाह—तत्रेति। परिच्छेदपक्षे इत्यर्थः। तर्हि—तदा, अविषयस्य—निर्गुणत्वेन प्रमाणागोचरस्य परिच्छेदविषयत्वासम्भवात्, आकाशस्य सादिद्रव्यत्वेन परिणामित्वेन च उपाधिपरिच्छेदसम्भवः। तथा ब्रह्मणोंऽशभेदरूपवास्तवपरिच्छेदपरिणामित्वापत्तिः, परिच्छिन्नांशस्य मध्यमपरिमाणत्वेना-

वयवस्य च प्रतिविम्बत्वायोगोऽपि; उपाधिसम्बन्धाभावात्, बिम्बप्रतिबिम्बभेदाभावात्, दृश्यत्वाभावाच्च । उपाधिपरिच्छि-

वैद्याभूषणी ।

अथ प्रतिबिम्बपक्षं निराकरोति—निर्धर्म्मकस्येत्यादिना । निर्धर्म्म-कस्योपाधिसम्बन्धाभावात्, व्यापकस्य बिम्बप्रतिबिम्बभेदाभावान्निरवयस्य दृश्यत्वाभावाच्च, ब्रह्मणः प्रतिविम्ब ईश्वरो जीवश्च नेत्यर्थः । रूपादि-धर्म्मविशिष्टस्य परिच्छिन्नस्य सावयवस्य च सूर्य्यादेस्तद्विदूरे जलाद्यपाधौ प्रतिविम्बो दृष्टः, तद्विलक्षणस्य ब्रह्मणः स न शक्यो वक्तुमित्यर्थः । नन्वाकाशस्य तादृशस्यापि प्रतिबिम्बदर्शनाद् ब्रह्मणः स भविष्यतीति

राधामोहनी ।

ऽनित्यत्वापत्तिरद्वैतविरोधश्चेति । व्यापकस्येति । जलदर्पणादौ जलदर्पणादिगत-वस्तूनां प्रतिविम्बत्वादर्शनात् सर्वव्यापकत्वेन तत्तदुपाधौ विम्बवत् स्थितस्य ब्रह्म-णस्तत्र प्रतिविम्बवत् तत्प्रतिविम्बितत्वम् आरोपिततद्वृत्तित्वम् । वास्तवतद्वृ-त्तिपदार्थस्याऽऽरोपिततद्वृत्तित्वं वक्तुमशक्यमेवेति । न च निरुक्तश्रुतिबलात् सम्ब-न्धद्वयकल्पनेन—एकसम्बन्धेन वास्तवोपाधिवृत्तित्वम्, अन्यसम्बन्धेनाऽवास्तवो-पाधिवृत्तित्वं ब्रह्मणः कल्प्यते, इत्यत आह—निरवयवस्येति । न च स्फटिकादौ जवालौहित्यस्य निरवयवस्य प्रतिविम्बत्वदर्शनान्निरवयवस्य ब्रह्मणोऽपि प्रतिविम्बत्व-सम्भवः, इति वाच्यम्, स्फटिकादौ सन्निहितजवादेरेव प्रतिविम्बितत्वस्वीका-रात् । एतदस्वरसेनैव वाह—उपाधिसम्बन्धाभावादिति । ब्रह्मण इत्यादि ब्रह्म-णोऽसङ्गत्वश्रुतिबलादिति । ननु ब्रह्मणोऽसङ्गत्वं वास्तवसम्बन्धशून्यत्वम्—अवास्त-वसम्बन्धश्च स्वीक्रियते । तत्र मूलाविद्याकृतविलक्षणमवास्तवसम्बन्धमादाय वि-म्बत्वम् । अदृष्टविशेषाधीनावास्तवसम्बन्धविशेषः प्रतिविम्बत्वनियामकः, इत्यत आह—दृश्यत्वाभावाच्चेति । जले चक्षुःसंयोगे चक्षुरुच्छलितमाकाशस्थज्योतिषि लग्नं

न्नाकाशस्थज्योतिरंशस्यैव प्रतिबिम्बो दृश्यते, न त्वाकाशस्य, दृश्यत्वाभावादेव ॥

---

वैद्याभूषणी ।

चेत्, तत्राह—उपाधीति । ग्रहनक्षत्रप्रभामण्डलस्येत्यर्थः । अन्यथा वायुकालदिशामपि स दर्शनीयः । यत्तु ध्वनेः प्रतिध्वनिरिव ब्रह्मणः प्रतिबिम्बः स्यादित्याह, तन्न चारु; अर्थान्तरत्वादिति प्रतिबिम्बवादोऽप्यतितुच्छः ॥

राधामोहनी ।

जलवृत्तित्वेनाऽऽकाशस्थज्योतिरंशं दर्शयति, वस्तुनोऽदृश्यत्वे चक्षुषोऽसद्वृत्तित्वेन तद्वस्तुबोधनासम्भवात्, लिङ्गदेहस्याप्यदृश्यतया तद्वृत्तितया ब्रह्मणश्चक्षुषा बोधनायोगात्, नहि चक्षुरन्तरेण प्रतिबिम्बे मानान्तरमस्ति । अदृश्यस्य प्रतिबिम्बत्वायोगे दृष्टान्तं दर्शयति—उपाधिपरिच्छिन्नेति । ननु निरुक्तश्रुतिरेव ब्रह्मप्रतिबिम्बे मानं मायानियन्तृत्वमायानियम्यत्वादिविरुद्धधर्मनिबन्धनेश्वरजीवभेदकसाधकन्यायानुगृहीतया बलवत्या

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति ॥" ( मु० ३।१ )

इत्यादिश्रुत्या,

"अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" । (श्वे० ४।५)

इत्यादिश्रुत्या,

"एवं ह वै पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् ।
एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ॥" (प्र०५।५) इत्यादिश्रुत्या च विरोधात् "यथा ह्ययं ज्योतिरात्मा विवस्वान्" इत्यादिश्रुतेरर्थान्तरपरत्वात् ।

तथा वास्तवपरिच्छेदादौ सति सामानाधिकरण्यज्ञानमात्रेण

---

वैद्याभूषणी ।

ब्रह्मैवाहमिति ज्ञानमात्रेण तद्रूपावस्थितिः स्यादिति यदभिमतम्, तत् खल्पाधेर्वास्तवत्वपक्षे न सम्भवतीत्याह—तथा वास्तवेति । आदिना प्रतिबिम्बो ग्राह्यः । न खलु निगडितः कश्चिद्दीनो राजैवाऽह-

राधामोहनी ।

तथाहि—अजोऽयमात्मा स्वगतचित्कणजीवाख्यांशवृन्दद्वारा क्षेत्रेषु बहुरूपः प्रतीयते, तेषां जीवानामपि चेतनत्वेनात्मत्वेन प्रतीतेरात्मन एव नानात्वप्रवादः इति श्रुतिसिद्धमात्मैक्यं सङ्गच्छते । श्रुतौ 'ब्रह्मलोकम्' । इत्यस्य ब्रह्मैव लोकं आलोचनीयममित्यर्थः । तथाहि—माध्वभाष्यधृतपद्मपुराणवचनम्,

"चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ! ।
जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥
इतरेष्वात्मशब्दस्तु सोपचारो विधीयते ।" इति ।

सोपचारः—चेतनत्वलक्षणसादृश्येन लाक्षणिकः,

"आततत्वाच्च मातृत्वादात्मा हि परमो हरिः ।"

इत्युक्तव्यापकत्वलक्षणयोगस्य जीवेष्वसम्भवात्, तेषां सूक्ष्मत्वेन श्रुतिसिद्धत्वात् । तथाहि श्रुतिः—"यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवात्मानो व्युच्चरन्ति" ( बृ० २।१।२० ) इति "केशाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः" इति च, जले तत्स्वभावेन सूर्याद्याकारेण परिणतसूर्यांशप्रभाविशेषस्य प्रतिबिम्बत्वमते निरुक्तश्रुतेर्यथाश्रुतार्थतासम्भवोऽपि ॥

वास्तवपरिच्छेदपक्षे दूषणान्तरम्—वास्तवपरिच्छेदादौ सतीति । सामानाधिकरण्यज्ञानमात्रेण इति "तत्त्वमसि" इति श्रुत्या तत्पदार्थपरमेश्वरत्वम्पदार्थजीवयो-

न तत्त्यागश्च भवेत् । तत्पदार्थप्रभावस्तत्र कारणमिति चेदस्माकमेव मतसम्मतम्* ॥

उपाधेराविद्यकत्वे तु तत्र तत्परिच्छिन्नत्वादेरप्यघटमानत्वा-

---

वैद्याभूषणी ।

मिति ज्ञानमात्राद्राजा भवन् दृष्ट इति भावः । ननु ब्रह्मानुसन्धिसामर्थ्याद् भवेदिति चेत्, तत्राह—तत्पदार्थेति । तथा च त्वन्मतक्षतिरिति ॥

अथोपाधेराविद्यकत्वपक्षे परिच्छेदादिवादद्वयं निराकरोति—उपाधेरिति । आविद्यकत्वे रज्जुभुजङ्गादिवन्मिथ्यात्वे सतीत्यर्थः । तत्रो-

राधामोहनी ।

रैक्यग्रहमात्रेणेत्यर्थः । तत्त्यागः—वास्तवपरिच्छेदनाशः, परिच्छेदकारणस्य वास्तवोपाधिसम्बन्धस्य ब्रह्ममात्रसाक्षात्कारेऽपि नाशासम्भवात् ब्रह्मणि उपाधेरारोपितत्व एव तत्साक्षात्कारेण तन्नाशो भवेदिति भावः । तत्पदार्थप्रभाव इति श्रुतिघटकतत्पदार्थपरमेश्वरस्य प्रभावः स्वस्मिन् जीवैक्यसाक्षात्कारः, तत्र वास्तवोपाधिसम्बन्धनाशद्वारा परिच्छेदकनाशे, कारणं श्रुतिसिद्धमिति भावः । अस्माकमेवेति, श्रुतौ तत्पदेन परमेश्वरतटस्थांशलक्षणया तदंशत्वमित्यभेदबोधः । "स्थूलसूक्ष्मदेहसम्बन्धनाशे जीवानां मुक्तिहेतुः" इति श्रुतिसिद्धमस्माकं मतमेव भवतामपि सम्मतमापद्येतेत्यर्थः ॥

अघटमानत्वात्—वास्तविकत्वासम्भवात् । उपाधिमयेति—वास्तवोपाधिकृतेत्यर्थः । तद्दर्शनया—परिच्छेददृष्टान्तेन । यद्यपि तन्मते घटादेराकाशस्य तत्परिच्छे-

---

* 'मतं सम्मतम्' इति पाठान्तरम् ।

दाविद्यकत्वमेवेति घटाकाशादिषु वास्तवोपाधिमयतद्दर्शनया न तेषामवास्तवस्वप्नदृष्टान्तोपजीविनां सिद्धान्तः सिध्यति, घटमाताघटमानयोः सङ्गतेः कर्त्तुमशक्यत्वात् । ततश्च तेषां तत्तत्

वैद्याभूषणी ।

पाधिपरिच्छिन्नत्वतत्प्रतिबिम्बित्वयोरप्यनुपपद्यमानत्वान्मिथ्यात्वमेवेति हेतोः, घटाकाशादिषु घटपरिच्छिन्नाकाशे घटाम्बुप्रतिबिम्बाकाशे च वास्तवोपाधिमयतदुभयदृष्टान्तदर्शनया तेषां चिन्मात्राद्वैतिनामेकजीववादपरिनिष्ठत्वादवास्तवस्वप्नदृष्टान्तोपजीविनां सिद्धान्तो न सिध्यति । उपाधेर्मिथ्यात्वे तेन परिच्छेदः प्रतिबिम्बश्च ब्रह्मणो मिथ्यैव स्यादतो मिथ्योपाधिदृष्टान्तत्वेन सत्यघटघटाम्बुनोः प्रदर्शनमसमञ्जसमेव । घटघटाम्बुदृष्टान्तप्रदर्शनं घटमानम्, विद्याविद्यावृत्तिरूपदार्ष्टान्तिकप्रदर्शनं

राधामोहनी ।

दस्य चाऽवास्तवत्वात् तद्दृष्टान्ततासम्भवः, तथापि मिथ्याभूतानामपि ब्रह्मातिरिक्तानां द्विविधं सत्त्वम्, केषाञ्चिद्व्यावहारिकं घटादिदेहादीनाम्, केषाञ्चिच्च प्रातिभासिकं यथा रज्जुसर्पादेरिति । तथा चाऽऽकाशस्य सावयवत्वेन विकारित्वेन च व्यावहारिकस्य तत्परिच्छेदस्योपाधिकृतस्य घटमानत्वम् । ब्रह्मणश्च निरवयवत्वेन निर्विकारत्वेन तदुपाधेराविद्यकत्वेन च तत्परिच्छेदकस्य व्यावहारिकस्याऽघटमानत्वमिति प्रातिभासिकपरिच्छेद एवाङ्गीकार्यः इति न घटाकाशस्य दृष्टान्ततासम्भवः, घटाकाशपरिच्छेदस्य तद्वास्तविकत्वमुक्तं तद्व्यावहारिकस्य सत्त्वमेवेति भावः । स्वप्नस्य दृष्टान्तता च तन्मते सम्भवः । तथाहि—देहादितत्कृतब्रह्मपरिच्छेदो मिथ्या स्वप्नदेहादिवत्, इत्येवं स्वप्नदृष्टान्तोपजीविनां सिद्धान्तः—व्यावहारिकब्रह्मपरिच्छेदो न सिद्ध्यतीत्यर्थः । अत्र हेतुमाह-अघटमानघटमानयोरिति ।

सर्व्वमविद्याविलसितमेवेति स्वरूपमप्राप्तेन तेन तेन तत्तद् व्यव-स्थापयितुमशक्यम् ।

इति ब्रह्माविद्ययोः पर्य्यवसाने सति यदेवं ब्रह्म चिन्मात्र-

वैद्याभूषणी ।

त्वघटमानम् । तयोः सङ्गतिः सादृश्यलक्षणा कर्त्तुमशक्यैव, सादृश्या-भावात् । ततश्चेति । तत्तत् सर्व्वं परिच्छेदप्रतिबिम्वकल्पनमविद्याविल सितमज्ञानविजृम्भितमेवेत्येवमुक्तरीत्या स्वरूपमप्राप्तेनाऽसिद्धेन तेन परि-च्छेदवादेन तेन प्रतिबिम्बवादेन च तत्तद् व्यवस्थापयितुं प्रतिपादयितु-मशक्यम् । ततश्च हन्तृहतन्यायेन व्यासदृष्टप्रकारकस्तद्विभागो ध्रुवः ॥

ननु परिच्छेदादिवादद्वये नाऽस्माकं तात्पर्य्यम्, तस्याऽज्ञबोधनाय कल्पितत्वात्, किन्त्वेकजीववाद एव तदस्ति ।

"स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितुष्टिमेति ॥"(कै० १२)

इत्यादिकैवल्योपनिषदि तस्यैवोपपादितत्वात् । तद्वादश्चेत्थम्—"एकमे-वाद्वितीयम्" (छा० ६।२।१) इत्याद्युक्तश्रुतिभ्योऽद्वितीयचिन्मात्रो ह्यात्मा । स चात्मन्यविद्यया गुणमयीं मायां तद्वैषम्यजां कार्य्यसंहतिञ्च कल्पयन्न-

राधामोहनी ।

सङ्गतेरिति । तुल्यतया सिद्धेरित्यर्थः । ततश्चेति देहाद्युपाधिकृतब्रह्मपरिच्छेदस्य प्रातिभासिकत्वाच्चेत्यर्थः । अविद्याविलास एव—खपुष्पादिवदारोपविषय एव । स्वरूपमप्राप्तेन—व्यावहारिकसत्त्वमप्राप्तेन, तेन तेनेति तत्तदुपाधिकृतपरिच्छेदविशि-ष्टब्रह्मण इत्यर्थः । तत्तदिति संसारवैचित्र्यमित्यर्थः ॥

त्वेनाऽविद्यायोगस्याऽत्यन्ताभावास्पदत्वाच्छुद्धम्, तदेव तद्योगादशुद्ध्या* जीवः, पुनस्तदेव जीवाविद्याकल्पितमायाश्रयत्वादीश्वरः, तदेव च तन्मायाविषयत्वाज्जीव इति विरोधस्तदवस्थ एव

वैद्याभूषणो ।

स्मदर्थमेकं युष्मदर्थांश्च बहून् कल्पयति । तत्राऽस्मदर्थः—स्वस्वरूपः पुरुषः । युष्मदर्थश्च—महदादीनि भूम्यन्तानि जडानि, स्वतुल्यानि पुरुषान्तराणि, सर्वेश्वराख्यः पुरुषविशेषश्चेत्येवं त्रिविधः ।

"जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति (नृ० ९) इति श्रुत्यन्तराच्च। गुणयोगादेव कर्त्तृत्वभोक्तृत्वे तत्राऽऽत्मन्यध्यस्ते, यथा स्वप्ने कश्चिद्राजधानीं राजानं तत्प्रजाश्च कल्पयति, तन्नियम्यमात्मानञ्च मन्यते, तद्वत् । जाते च ज्ञाने, जागरे च सति, ततोऽन्यन्न किञ्चिदस्तीति चिन्मात्रमेकमात्मवस्त्विति । तमिमं वादं निराकर्त्तुमाह—इति ब्रह्मेति । इत्येवं पूर्व्वोक्तरीत्या परिच्छेदादिवादद्वयस्य प्रत्याख्याने जाते, ब्रह्म चाऽविद्या चेति द्वयोः पर्य्यवसाने सतीत्यर्थः। अत्यन्ताभावास्पदत्वादिति। "अगृह्यो न हि गृह्यते"(बृ०३।९।२६) इत्यादिश्रुतेरेवेत्यर्थः।

राधामोहनी ।

दूषणान्तरमाह—ब्रह्माविद्ययोरिति । पर्य्यवसाने—विचारेण स्वरूपनिर्णये सतीति, 'विरोधस्तदवस्थ एव' इत्यग्रेणाऽस्यान्वयः । चिन्मात्रत्वेन-स्वप्रकाशसुखात्मकत्वेन, अविद्यायोगस्य—अविद्याया निरासेन तत्कृतमोहादेः । तद्योगादिति । अविद्यायोगेन परिच्छिन्नत्वात् प्रतिबिम्बरूपत्वाद्वा इत्यर्थः । अशुद्धया—मुग्धतया,

* 'तद्योगादशुद्धः' इति वा पाठः ।

स्यात्। तत्र च शुद्धायां चित्यविद्या, तदविद्याकल्पितोपाधौ तस्यामीश्वराख्यायां विद्येति, तथा विद्यावत्त्वेऽपि मायिकत्वमित्यसमञ्जसा च कल्पना स्यादित्याद्यनुसन्धेयम् ॥

वैद्याभूषणी।

विरोधस्तदवस्थ इति। विरोधत्वादेवाशक्यं व्यवस्थापयितुमित्यर्थः। तत्र च शुद्धायामिति। 'शुद्धे ब्रह्मण्यकस्मादविद्यासम्बन्धस्तत्सम्बन्धात्तस्य जीवत्वम्। तेन जीवेन कल्पिताया मायाया आश्रयो भूत्वा तद्ब्रह्मैवेश्वरः। तस्येश्वरस्य मायया परिभूतं ब्रह्मैव तज्जीवः।' इत्यादिविप्रलापोऽयमविदुषामेव, न तु विदुषामिति भावः। मायिकत्वं प्रतारकत्वमित्यर्थः। "स एव माया" इति श्रुतिस्तु ब्रह्मायत्तवृत्तिकत्वब्रह्मव्याप्यत्वाभ्यां ब्राह्मणोऽनतिरिक्तो जीव इत्येव निवेदयन्ती गतार्था, "जीवेशौ" इति श्रुतिस्तु मायाविमोहिततार्किकादिपरिकल्पितजीवेशपरतया गतार्थेति, न किञ्चिदनुपपन्नम् ॥

राधामोहनी।

रागद्वेषादिमत्त्वेन जीवा इति। तथा च मोहामोहयोः सङ्गासङ्गयोश्च विरोधः। विरोधान्तरमाह—पुनरिति। तथेत्यर्थः। जीवाविद्याकल्पितेति। तथा च जीवभावं विना न मायाश्रयत्वमीश्वरस्य, तथा ईश्वराश्रितमायाकृतमोहं विना न जीवभावः, इत्यन्योन्याश्रय इति भावः। शुद्धायां चितीति—निरुपाधौ ब्रह्मणीत्यर्थः। तस्यामिति—चितीत्यर्थः। तथा चैकस्याऽविद्याविद्ययोर्विरोधः स्फुट इति दर्शयति–विद्यावत्त्वेऽपीति ॥

किञ्च, यद्यत्राभेद एव तात्पर्य्यमभविष्यत्तर्ह्येकमेव ब्रह्माऽज्ञानेन भिन्नम्, ज्ञानेन तु तस्य भेदमयं दुःखं विलीयत इत्यपश्यदित्येवाऽवक्ष्यत् । तथा श्रीभगवल्लीलादीनां वास्तवत्वाभावे सति श्रीशुकहृदयविरोधश्च जायते ॥

तस्मात् परिच्छेदप्रतिबिम्बत्वादिप्रतिपादकशास्त्राण्यपि क-

---

वैद्याभूषणी ।

अनुपपत्त्यन्तरमाह—किञ्चेति । अत्र—श्रीभागवते शास्त्रे । इत्येव इति । 'पूर्णः पुरुषः कश्चिदस्ति तदाश्रितया मायया जीवो विमोहितोऽनर्थं भजति । तदनर्थोपशमने च पूर्णस्य तस्य भक्तिः', इत्यपश्यदित्येवं नावक्ष्यदित्यर्थः ॥

तस्मादिति । तत्सादृश्येन परिच्छिन्नप्रतिबिम्बतुल्यत्वेनेत्यर्थः । सिंहो देवदत्त इत्यत्र यथा गौण्या वृत्त्या सिंहतुल्यत्वं देवदत्तस्योच्यते

राधामोहनी ।

यद्यत्रेति । अत्र श्रीभागवते,

"अपश्यत् पुरुषं पूर्णं मायां च तदपाश्रयाम्"

इति वचने अपश्यदिति व्यासः इत्यादि, अवक्ष्यदिति सूत इत्यादि, तथोक्तावेव स्पष्टार्थः स्यादिति भावः । 'सूतस्याऽद्वैतमतस्वीकारस्तद्गुरुशुकसम्मतिं विना न' इति विभाव्य दूषणान्तरमाह—तथेति । अद्वैतवादस्य सूतसम्मतत्वे इत्यर्थः । वास्तवत्वाभावे अद्वैतभङ्गभिया वास्तवत्वास्वीकारे, शुकहृदयविरोधश्चेति शुकहृदयग्रन्थे श्रीभगवल्लीलाया वास्तविकत्वेन कथनादिति भावः । तथा च सर्वतोऽतिशयज्ञानस्य शुकस्य द्वैतवादस्वीकारेण तन्मतं न समीचीनमिति भावः ॥

थश्चित्तत्सादृश्येन गौण्येव वृत्त्या प्रवर्त्तेरन्। "अम्बुवदग्रहणात्तु न

वैद्याभूषणी।

न तु सिंहत्वं तद्वदित्यर्थः। नन्वेवं केन निर्णीतम्, इति चेत्, सूत्रकृता व्यासेनैव इति तत्सूत्रद्वयं दर्शयति। तत्रैकेन तद्वादद्वयमसम्भवाद् निरस्यति—अम्बुवदिति। यथाऽम्बुना भूखण्डस्य परिच्छेद एवमुपाधिना ब्रह्मप्रदेशस्य स स्यात्, न अम्बुना भूखण्डस्य इव उपाधिना ब्रह्मप्रदेशस्य ग्रहणाभावात्। "अगृह्यो न हि गृह्यते" (बृ० ३।९।२६) इति हि श्रुतिः। अतो न तथात्वम्, ब्रह्मण उपाधिपरिच्छिन्नत्वं न इत्यर्थः। यद्वा, अम्बुनि यथा रवेः प्रतिविम्वः परिच्छिन्नस्य गृह्यते, एवमुपाधौ ब्रह्मणः प्रतिविम्वो व्यापकस्य न गृह्यते, अतो न तथात्वम्, तस्य प्रतिविम्बो न इत्यर्थः। तर्हि शास्त्रद्वयं कथं सङ्गच्छते? तत्राह—

राधामोहनी।

"अम्बुवदग्रहणात्" इति पूर्वपक्षवेदान्तसूत्रम्। अस्यार्थः—परमात्मजीवात्मनोरैक्यम्, अग्रहणात्—भेदस्याग्रहणात्—अभेदस्य श्रवणादिति यावत्, "सर्वे एकीभवन्ति"(प्र० ४।२) इति श्रुतेः, "स ऐक्षत" "वहु स्याम्" इत्यादिश्रुतेश्च। तथा चैकमेव ब्रह्म तत्तदुपाधिभेदेन भिन्नमेव, तत्तदुपाधिविगमे पुनरैक्यम्, अम्बुवत्, एकस्माद् घटादुद्धृतं जलं पुनस्तत्रैव जले निहितमेकीभवतीति तद्वदिति। अत्र सिद्धान्तसूत्रम्—"वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्" इति। जलादुद्धृतं जलं अवयवविभागेन पूर्वजलनाशेन जलान्तरमुत्पन्नम्, न तु तयोरैक्यम् तदाधारभूतजलस्य ह्रासात्। पुनस्तत्र निक्षिप्तं तज्जलं मिलितमुभाभ्यां जलान्तरमुत्पन्नम् वृद्धिदर्शनात्। तदाह—"वृद्धिह्रासभाक्त्वम्" इति।

तथात्वम्" (ब्र० सू० ३।२।१९) "वृद्धिह्रासभाक्त्वमन्तर्भावादुभय-सामञ्जस्यादेवम्" ( ब्र० सू० ३।२।२० ) इति पूर्व्वोत्तरपक्षमय-न्यायाभ्याम् ॥

---

वैद्याभूषणी।

वृद्धीति द्वितीयेन। तद्द्वयं न मुख्यवृत्त्या प्रवर्त्तते। किन्तु वृद्धिह्रासभाक्त्वं गुणांशमादायैव यथा महदल्पौ भूखण्डौ, यथा च रवितत्प्रतिबिम्बौ वृद्धिह्रासभाजौ, तथा परेशजीवौ स्याताम् कुतः? अन्तर्भावात्, एतस्मिन्नंशे शास्त्रतात्पर्यपूर्त्तेः। एवं सत्युभयोः—दृष्टान्तदार्ष्टान्तिकयोः, सामञ्जस्यात्—सङ्गतेरित्यर्थः। पूर्वन्यायेन परिच्छेदादि-वादद्वयस्य खण्डनम्, उत्तरन्यायेन तु गौणवृत्त्या तस्य व्यवस्थापन-मिति। ब्रह्मणः खण्डः प्रतिबिम्बो वा जीव एवेति सूत्रकृतां मतम्, ईशोऽपि ब्रह्मणः खण्डः प्रतिबिम्बो वेति मायिनामीशविमुखानां मत-मिति बोद्धव्यम् ॥

राधामोहनी।

वृद्धिह्रासभाक्त्वं यतो भवति, अतो मिलितजलयोर्भेदः परमार्थः।

ननु कथं तदा मिलितजलयोरेकत्वप्रतीतिः? इत्यत आह—"अन्तर्भावात्" एकस्मिन् जलेऽपरजलस्यान्तर्भावात् विलक्षणसम्बन्धादुभयसामञ्जस्यात् तयोर्भेदस्य तयोरैक्यप्रतीतेश्च, इति द्वयोरुपपत्तिरित्यर्थः। तथा चाऽभेदप्रतीतिर्न पारमार्थिकी, परिमाणभेदेन द्रव्यभेदस्य सर्वसिद्धत्वात्। एवं जीवात्मपरमात्मनोरपि भेदः पारमार्थिकः, प्रागुक्तविरुद्धधर्माध्यासात्। अभेदप्रतीतिस्तु अन्तर्भावाद्—उपाधिविगमे विलक्षणसम्बन्धापायात्। तथा च श्रुतिः "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति" ( क० ४, १५, ) इति।

तत एवाभेदशास्त्राण्युभयोश्चिद्रूपत्वेन जीवसमूहस्य दुर्घटघटनापटीयस्या स्वाभाविकतदचिन्त्यशक्त्या स्वभावत एव तद्र-

वैद्याभूषणो ।

तत इति । परिच्छेदादिशास्त्रद्वयस्य तत्सादृश्यार्थकत्वेन नीतत्वादेव हेतोः "त्वं वा अहमस्मि भगवो देव अहं वै त्वमसि तत्त्वमसि" इत्यादीन्यभेदशास्त्राणि तदेतद्व्याससमाधिसिद्धान्तयोजनाय मुहुरप्यग्रे योजनीयानीति सम्बन्धः । केन हेतुनेत्याह—उभयोरीशजीवयोश्चिद्रूपत्वेन हेतुना । यथा गौरश्यामयोस्तरुणकुमारयोर्वा विप्रयोर्विप्रत्वेनैक्यं ततश्च जात्यैवाऽभेदः, न तु व्यक्त्योरित्यर्थः । तथा जीवसमूहस्य दुर्घटघटनापटीयस्या तदचिन्त्यशक्त्या स्वभावत एव तद्रश्मिपरमाणुगणस्था-

राधामोहनी ।

स्कान्दे च—"उदके तूदकं सिक्तं मिश्रमेव यथा भवेत् ।
न चैतदेव भवति यतो वृद्धिः प्रदृश्यते ॥
एवमेव हि जीवोऽपि तादात्म्यं परमात्मना ।
प्राप्नोति नासौ भवति स्वातन्त्र्यादिविशेषणात् ॥" इति ।

तादात्म्यं मिश्रताम् । नासौ भवतीति—न परमात्मा भवति । स्वातन्त्र्यादीति, आदिना निर्विकारत्वादिपरिग्रहस्तेन तयोर्मिलने पदार्थान्तरतापत्तिरपीति ॥

तत एव—गौण्या लक्षणया प्रवर्तितत्वादेव, अभेदशास्त्राणि योजनीयानीत्यन्वयः । सादृश्ये लक्षणा गौणी, इति तां प्रदर्शयति—उभयोः ईशजीवयोः । 'चेतनत्वेन' इत्यस्य 'जीवसमूहस्य तदेकत्वेऽपि' इत्यनेनान्वयः । 'चेतनत्वेन' इत्यभेदे तृतीया । तथा च चेतनस्वरूपैकधर्मत्वमेव ईश्वरजीवयोरेकत्वमित्यर्थः । यद्यपि तयोर्नैकं चेतनम्, ईश्वरस्य नित्यसर्वविषयकमेकं चैतन्यम्, जीवानां चानि-

श्मिपरमाणुगणस्थानीयत्वात्तद्व्यतिरेकेणाऽव्यतिरेकेण च विरोधं परिहृत्याऽग्रे मुहुरपि तदेतद्व्याससमाधिलब्धसिद्धान्तयोजनाय योजनीयानि ॥

---

वैद्याभूषणी ।

नीयत्वात्तद्व्यतिरेकेण,अव्यतिरेकेण च हेतुना विरोधं परिहृत्येति। परेशस्य खलु स्वरूपानुबन्धिनी पराख्या शक्तिरुष्णतेव रवेरस्ति, "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति मन्त्रवर्णात्, "विष्णुशक्तिः परा प्रोक्ता" इति स्मरणाच्च। सा हि तदितरान्निखिलान्नियमयति। यस्मात् तदन्ये सर्वेऽर्थाः स्वस्वभावमत्यजन्तो वर्त्तन्ते। प्रकृतिः कालः कर्म्म च स्वान्तःस्थितमपीश्वरं स्प्रष्टुं न शक्नोति, किन्तु ततो बिभ्यदेव स्वस्वभावे तिष्ठति। जीवगणश्च तत्सजातीयोऽपि न तेन संपर्चितुं

राधामोहनी ।

त्यमसर्वविषयकं नानाविधम्, तथापि तदुभयोरेकं चैतन्याश्रयत्वमङ्गीकृत्य समाधेयम्। स्वभावत एव कारणं विना नित्यदैव तद्रश्मिपरमाणुगणस्थानीयत्वात् तस्येश्वरस्य रश्मिपरमाणुगणतुल्यधर्मत्वात्, रश्मितुल्यता च, प्रकाशमयत्वेन निरवयवस्य ब्रह्मणस्तेजस्वितानुपपत्त्या न वास्तवरश्मिता तेषाम्। ननु निरवयवत्वे ब्रह्मणः कथं जीवाश्रयत्वम्? इत्यत आह—स्वाभाविकतदचिन्त्यशक्त्येति। तथा च यथैकस्य सूर्यस्य तेजोमयस्य बहिर्निर्गच्छन्तो रश्मिगणाः सूर्यमण्डले पुनः प्रविशन्तोऽपि न दृश्यन्ते, सूर्यमण्डलाद्भिन्ना अभेदेनोपचर्यन्ते, तथाऽदृष्टादिवशात् ब्रह्मणः सकाशान्निःसरन्तो देहसङ्गेन संसारिणः कदाचिद्विद्योत्पत्त्या देहसङ्गनिर्मुक्ता ब्रह्मणि पुनः प्रविशन्तो ब्रह्मतो भिन्ना अपि अभेदेनोपचर्यन्त इत्यर्थः। ननु ब्रह्मतो यदि जीवा निःसरन्ति, तदा किं ब्रह्म परिच्छिन्नम्? इत्यत आह—तद्व्यतिरेकेणेति।

तदेवं मायाश्रयत्वमायामोहितत्वाभ्यां स्थिते तयोर्भेदे तद्भजनस्यैवाभिधेयत्वमायातम् ॥

अतः श्रीभगवत एव सर्वहितोपदेष्टृत्वात्, सर्वदुःखहर-

---

वैद्याभूषणी ।

शक्नोति किन्तु तमाश्रयन्नेव वृत्तिं लभते, मुख्यप्राणमिव श्रोत्रादिरिन्द्रियगण इति । तथा च यद्वृत्तिर्यदधीना स तद्रूप इत्यभेदशास्त्रस्यापि भेदशास्त्रेण सार्द्धमविरोधोऽयं श्रीव्याससमाधिलब्धसिद्धान्तसव्यपेक्ष इति । तथा चात्रेशजीवयोः स्वरूपाभेदो नास्तीति सिद्धम् ॥

तदेवमिति स्फुटार्थम् । तद्भजनस्य मायानिवारकस्येत्यर्थः ।

मायामोहनिवारकत्वाद् यस्य भजनमभिधेयम्, स भगवानेव भजतां प्रेमयोग्य इत्यर्थादागतमित्याह—अत इति । अतो मायामोहनिवारकभजनत्वाद्भगवत एव परमप्रेमयोग्यत्वमिति सम्बन्धः । जीवात्मा प्रेमयोग्यः, परमात्मा भगवांस्तु परमप्रेमयोग्य इत्यर्थः । कुत इत्यपेक्षायां हेतुचतुष्टयमाह—सर्वेति । रश्मीनामित्यादि । सूर्य्यो यथा रश्मीनां

राधामोहनी ।

यद्यपि तद्व्यतिरेकस्थलमप्रसिद्धम्, तथापि जीवानां देहसम्बन्धदशायामपि ब्रह्मसम्बन्धित्वादित्यत्र तात्पर्यम् । यद्वा, तस्य—ब्रह्मणः, व्यतिरेकेण—व्यतिरिक्तदेहसम्बन्धकृतभेदेन, अव्यतिरेकेण—देहसम्बन्धाभावे तदैक्यप्रायेण, विरोधं परिहृत्य भेदाभेदबोधकश्रुतिस्मृतिन्यायादिविरोधं परिहृत्येत्यर्थः । तथा च क्वचिच्चेतनत्वेनैक्यविवक्षया, क्वचिच्च धर्मधर्मिणोरभेदविवक्षयाऽभेदवचनानि व्याख्येयानीति भावः ॥

तदेवं निरुक्तैतत्प्रकारेण, तयोर्भेद इति सिद्धे सतीति शेषः । अभिधेयत्व-

त्वात्, रश्मीनां सूर्य्यवत् सर्वेषां परमस्वरूपत्वात्, सर्वाधिकगुणशालित्वात्, परमप्रेमयोग्यत्वमिति प्रयोजनञ्च स्थापितम् ॥

तत्राऽभिधेयञ्च तादृशत्वेन दृष्टवानपि । यतस्तत्प्रवृत्त्यर्थं श्रीभागवताख्यामिमां सात्वतसंहितां प्रवर्त्तितवानित्याह—अनर्थेति । भक्तियोगः श्रवणकीर्त्तनादिलक्षणः साधनभक्तिः, न तु

---

वैद्याभूषणी ।

स्वरूपं न, किन्तु परमस्वरूपमेव भवतीत्येवं जीवानां भगवानिति स्वरूपैक्यं निरस्तम् । अन्तर्यामिब्राह्मणात् सौवालब्राह्मणाच्च 'जीवात्मानः परात्मनः शरीराणि भवन्ति, स तु तेषां शरीरी' इति भेदः प्रस्फुटो ज्ञातः । अतः सर्वाधिकेति ॥

तत्राऽभीति । तादृशत्वेन—मायानिवारकत्वेन । दृष्टवानपि श्रीव्यासः ।

राधामोहनी ।

मिति श्रीभागवते इत्यादि ॥

सूर्यवत् सूर्यस्येव, सर्वेषां जीवानाम् परमस्वरूपत्वादिति-अत्रैव सूर्यदृष्टान्तः, परमत्वात् स्वरूपत्वाच्चेत्यर्थः । परमत्वं च निरतिशयसुखमयत्वम्, आत्मनः स्वतः प्रेमास्पदत्वं ततोऽप्यधिकप्रेमास्पदत्वसूचकमिदमिति बोध्यम् । प्रयोजनमिति-भगवत्प्राप्तिरूपमित्यर्थः । चकारात् तत्प्रेमापि तत्प्रयोजनम् । यद्वा, इति भगवतः प्रेमयोग्यत्वात, तत्सूचनेन प्रागुक्तं प्रेमाख्यप्रयोजनं सुष्ठुत्वेन स्थापितमित्यर्थः ॥

तत्र—समाधौ, अभिधेयम्—भक्तियोगम्, तादृशत्वेन—परमप्रेमास्पदभगवत्प्राप्तिहेतुत्वपुरस्कारेण । यतस्तत्प्रवृत्त्यर्थम्—भजनरूपाभिधेयप्रवृत्त्यर्थं प्रवर्त्तितवान्, अतो दृष्टवानपीत्यर्थः । श्लोकस्थस्य "चक्रे" इत्यस्य विवरणम्-प्रवर्त्तितवानिति ।

प्रेमलक्षणः । अनुष्ठानं ह्युपदेशापेक्षम्, प्रेम तु तत्प्रसादापेक्षमिति । तथापि तस्य तत्प्रसादहेतोस्तत्प्रेमफलगर्भत्वात् साक्षादेवानर्थोपशनत्वम्, न त्वन्यसापेक्षत्वेन,

"यत् कर्म्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यत्"

( भा० ११।२०।३२ )

इत्यादौ,

"सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गापवर्गम्"

( भा० ११।२०।३३ )

वैद्याभूषणो ।

अनुष्ठानम्—कृतिसाध्यम् । तत्प्रसादेति भगवदनुग्रहेत्यर्थः । तस्य—श्रवणादिलक्षणस्य । अन्यसापेक्षत्वेन—कर्म्मादिपरिकरत्वेन । ज्ञानादे-

राधामोहनी ।

आहेति । सूत इति शेषः । अनुष्ठानम्—साधनक्रिया । तत्प्रसादसापेक्षम्—साधनाधीनभगवदनुग्रहसापेक्षम् । ननु साधनभक्तेर्न साक्षादनर्थोपशमनत्वम्, इति कथं 'अनर्थोपशमम्' इत्युक्तम् ? इत्यत आह—तथापीति । भजनस्य भगवत्प्रसादव्यवधानेनाऽनर्थोपशमत्वेऽपि तस्य—भजनस्य, तत्प्रसादहेतोः—भगवत्प्रसादहेतोः, प्रेमफलगर्भत्वात्—प्रेमफलतात्पर्यकत्वात् । तथा च व्यापारेण व्यापारिणो नान्यथासिद्धिरिति भावः । अनर्थोपशमत्वम्—मायोपशमत्वम् । स तु प्रसादलभ्यप्रेमा । अस्य भजनस्य सापेक्षत्वेनेति । तथा च भजं विना नाऽनर्थशमनम् । प्रसादः—प्रेमा च द्वारमेवेति भावः । प्रेमा च स्वतः सिद्ध एव, साध्यता च तस्य प्राकट्यमात्रम्-इति निरपेक्षकत्वकथनं तस्येति । तत्र हेतुमाह—'यत् कर्मभिः' इत्यादि । तथा च—

इत्यादेः । ज्ञानादेस्तु भक्तिसापेक्षत्वमेव,

"श्रेयःस्रुतिं भक्तिम्" ( भा० १०।१४।४ )

इत्यादेः । अथवा, अनर्थस्य संसारव्यसनस्य तावत् साक्षात् अव्यवधानेनोपशमनम्, सम्मोहादिद्वयस्य तु प्रेमाख्यस्वीयफलद्वारेत्यर्थः । अतः पूर्ववदेवात्राभिधेयं दर्शितम् ॥

अथ पूर्ववदेव प्रयोजनञ्च स्पष्टयितुम्, पूर्वोक्तस्य पूर्णपुरुषस्य च श्रीकृष्णस्वरूपत्वं व्यञ्जयितुम्, ग्रन्थफलनिर्देशद्वारा तत्र तदनुभवान्तरं प्रतिपादयन्नाह—यस्यामिति । भक्तिः—

---

वैद्याभूषणी ।

स्त्विति । ज्ञानमत्र "यस्य ब्रह्म" इत्युक्तब्रह्मविषयकम् । सम्मोहादीत्यादिपदादात्मनो जड़देहादिरूपतामननं ग्राह्यम् । अत इति । अत्र अनर्थेतिवाक्ये ॥

अथेति । प्रयोजनम्—भगवत्प्रेमलक्षणम् । तत्रेति । तत्र—समाधौ श्रीव्यासस्यान्यमनुभवमित्यर्थः । आविर्भवतीति । प्रेम्णः परासारांशत्वेनो-

राधामोहनी ।

"सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।"

इत्यनेन भक्तेर्ज्ञानादिनिरपेक्षेण सर्वफलजनकत्वोक्त्याऽनर्थोपशमनत्वमिति भावः । 'ज्ञानादिकं भक्तिं विना निरर्थकम् इति नारदः' इत्याह—ज्ञानादेस्त्विति । ननु साक्षात्साधनत्वं द्वारानपेक्षमिति सिद्धान्तः, इत्यत आह—अथवेति । मोहादिद्वयस्य तु इत्यस्य 'उपशमम्' इत्यनुषङ्गेणान्वयात् 'तु'कारेण साक्षाद्व्यवच्छेदः, 'मोहादि' इति 'आदि'पदेन देहाभिमानपरिग्रहः ॥

प्रेमा, श्रवणरूपया साधनभक्त्या साध्यत्वात्। उत्पद्यते— आविर्भवति। तस्यानुषङ्गिकं गुणमाह—शोकेति। अत्रैषां संस्कारोऽपि नश्यतीति भावः;

"प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत्"

( भा० ५।५।६ )

इति श्रीऋषभदेववाक्यात्। परमपूरुषे-पूर्व्वोक्तपूर्णपुरुषे। किमाकारे इत्यपेक्षायामाह—कृष्णे--"कृष्णस्तु भगवान् स्वयम्" (भा०१।३।२८) इत्यादिशास्त्रसहस्रभावितान्तःकरणानां परम्परया तत्प्रसिद्धिमध्यपातिनाश्चासङ्ख्यलोकानां तन्नामश्रवणमात्रेण यः प्रथमप्रतीतिविषयः स्यात्, तथा तन्नाम्नः प्रथमाक्षरमात्रं

---

वैद्याभूषणी।

स्पर्त्त्यसम्भवादित्यर्थः। तस्येति प्रेम्णः। अत्र प्रेम्णि सति। कृष्णस्तु भगवानिति श्रीसूतादीनां श्रीजयदेवादीनाञ्चाऽसंख्यलोकानामित्यर्थः। तन्नामेति तन्नाम्न इति चोभयत्र कृष्णेति नाम बोध्यम्। रूढिरिति। प्रकृतिप्रत्ययसम्वन्धं विनैव यशोदासुते प्रसिद्धिर्मण्डपशब्दस्येव गृहविशेषे इत्यर्थः॥

राधामोहनी।

प्रीतिः—प्रेमा, श्रीकृष्णविशेषणपरमपुरुषपदस्य पूर्वोक्तपूर्णपुरुषपरत्वं वर्णनीयत्वेन समाधिलब्धपूर्णपुरुषोपक्रमेण व्यक्तीकृतग्रन्थस्याऽभिधेयभजनसम्वन्धित्वेन श्रीकृष्णस्य कथनात् सुखगम्यमेवेति। ननु कृष्णपदार्थ एव कः? इत्याकाङ्क्षायामाह—कृष्णस्त्वित्यादि। यन्नाममात्रेणेति—कृष्णेति नाममात्रेणेत्यर्थः। प्रथम-

मन्त्राय कल्पमानं यस्याभिमुख्याय स्यात्तदाकारे इत्यर्थः । आहुश्च नामकौमुदीकाराः—

"कृष्णशब्दस्य तमालश्यामलत्विषि यशोदायाः स्तनन्धये परब्रह्मणि रूढिः" इति ।

अथ तस्यैव प्रयोजनस्य ब्रह्मानन्दानुभवादपि परमत्वमनु-

---

वैधाभूषणी ।

अथेति । ब्रह्मानन्दाद् यस्य ब्रह्मेत्युक्तवस्तुसुखादपि परमत्वमुत्-

राधामोहनी ।

प्रतीतिविषयः स्यादिति—औत्सर्गिकप्रतीतिविषयो भवतीत्यर्थः । आभिमुख्याय—अभिमुखीकरणाय । तदाकार इति । स आकारः स्वाभाविकशरीरविशेषविशिष्टब्रह्मकृष्णपदार्थ इत्यर्थः । यशोदास्तनन्धये—यशोदास्तनपानकर्त्तरि, रूढिः—मुख्यावृत्तिः प्रसिद्धा, वृष्णिवंशावतीर्णमुपक्रम्य "कृष्णस्तु भगवान् स्वयम्" इत्युक्तत्वात् । वासुदेवेति नामान्तरमस्यैवेति भावः । 'यशोदास्तनन्धये' इति शरीरपरिचयाय, न तु तद्घटितं कृष्णपदप्रवृत्तिनिमित्तम्, किशोरमूर्त्तौ यशोदास्तनपानाभावात् ; यशोदाविशेषेणाऽपरिचयाच्च । स्वयं भगवता कृष्णेन यस्याः स्तनपानं कृतम्, तत्त्वेनोक्तौ परस्पराश्रयात् । न च यशोदात्वेनैव यशोदानिवेश इदानीन्तनयशोदातनयवारणाय नवतमालेति विशेषणमिति वाच्यम्, कृष्णपदेन यशोदास्तनपातृत्वेनानुपस्थितेः, 'पपौ यस्याः स्तनं हरिः' इत्यादौ कृष्णपर्यायहरिपदेन तथोपस्थितौ 'पपौ यस्याः स्तनम्' इत्यनेन पौनरुक्त्यापत्तेः,

"कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः ।
तयोरैक्यं परं ब्रह्म भुवि जातं न संशयः ॥"

इत्यादिशास्त्रलिङ्गव्युत्पत्त्या विरोधापत्तेश्चेति बोध्यम् ॥

अनुभूतवानिति । सूत इति शेषः । तादृशं ब्रह्मानन्दानुभवशालिनम् । अत

भूतवान्। यतस्तादृशं शुकमपि तदानन्दवैशिष्ट्यलम्भनाय ता-मध्यापयामासेत्याह—"स संहिताम्" इति। कृत्वानुक्रम्य चेति। प्रथमतः स्वयं संक्षेपेण कृत्वा, पश्चात्तु श्रीनारदोपदेशादनुक्रमेण विवृत्येत्यर्थः। अत एव श्रीमद्भागवतं भारतानन्तरं यदत्र श्रूयते, यच्चाऽन्यत्राऽष्टादशपुराणानन्तरं भारतमिति, तद् द्वयमपि समाहितं स्यात्। ब्रह्मानन्दानुभवनिमग्नत्वात् निवृत्तिनिरतं सर्वतो निवृत्तौ निरतम्, तत्राऽव्यभिचारिणमपीत्यर्थः॥

---

वैद्याभूषणी।

कृष्टत्वमनुभूतवान् श्रीव्यासः। तादृशं तदानन्दानुभविनमपि। तदा-नन्देति कृष्णप्रेमानन्दप्रापणायेत्यर्थः। अत एवेति। यदत्रेति। अत्र

राधामोहनी।

एवेति। आदौ सङ्क्षेपेण कृतस्य भागवतस्याऽनन्तरं विवृत्त्य कृतत्वादेव। अत्र—श्रीभागवते, अन्यत्र—

"अष्टादश पुराणानि कृत्वा सत्यवतीसुतः।
भारताख्यानमखिलं चक्रे वेदोपबृंहितम्॥"

इति वचने। समाहितम्—अविरुद्धम्। तथा च भागवतं पूर्वं संक्षेपेण कृतम्, भारतानन्तरं विस्तरतः इति भावः। केचित्तु अनुक्रम्य—अनुक्रमेण कृत्वेति व्याख्यानम्, अष्टादश पुराणानि कृत्वा भारताख्यानं खिलं पूर्णं चक्रे इति निरुक्तवचनार्थः। "मन्ये तद्दर्शनं खिलम्" इत्यत्र खिलशब्दस्योनार्थकत्वादिति भारतानन्तरमेवाऽष्टादश पुराणानीत्याहुः॥

तमेतं श्रीवेदव्यासस्य समाधिजातानुभवं श्रीशौनकप्रश्नोत्तरत्वेन विशदयन् सर्वात्मारामानुभवेन सहेतुकं संवादयति- "आत्मारामाश्च" इति । "निर्ग्रन्थाः"—विधिनिषेधातीताः, निर्गताहङ्कारग्रन्थयो वा । "अहैतुकीम्"—फलानुसन्धिरहिताम् । अत्र सर्वाक्षेपपरिहारार्थमाह—इत्थम्भूत आत्मारामाणामप्याकर्षणस्वभावो गुणो यस्य स इति । तमेवार्थं श्रीशुकस्याप्यनुभवेन संवादयति--हरेर्गुणेति । श्रीव्यासदेवाद् यत्किञ्चित् श्रुतेन गुणेन पूर्वमाक्षिप्ता मतिर्यस्य सः, पश्चादध्यगात् महद्विस्तीर्णमपि । ततश्च तत्संकथासौहार्देन नित्यं विष्णुजनाः प्रिया यस्य तथाभूतो वा तेषां प्रियो वा स्वयमभवदित्यर्थः । अयं भावः—

---

वेद्याभूषणी ।

श्रीभागवते । अन्यत्र—मात्स्यादौ ।

"अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
चक्रे भारतमाख्यानं वेदार्थैरुपबृंहितम्" ॥

इत्यनेनेत्यर्थः । तत्रेति—निवृत्तावित्यर्थः ॥

समाधिदृष्टस्याऽर्थस्य सर्वतत्त्वज्ञसम्मतत्वमाह--तमित्यादिना ।

राधामोहनी ।

तम्—ब्रह्मानन्दादप्यधिकतया कृष्णविषयकम्, एवं शुकमध्यापयामासेति वचनसूचितम्, सर्वात्मारामानुभवेन—तादृशानुभवमूलकहरिभजनेन, सहेतुकम्—कृष्णोत्कर्षरूपतद्धेतुबोधकं वचनम्, संवादयति—ज्ञापयति । आक्षिप्ता—शिथिला ।

ब्रह्मवैवर्त्तानुसारेण पूर्वं तावदयं गर्भमारभ्य श्रीकृष्णस्य स्वैरितया मायानिवारकत्वं ज्ञातवान्। ततः स्वानियोजनया श्रीव्यासदेवेनाऽऽनीतस्य तस्यान्तर्दर्शनात्तन्निवारणे सति कृतार्थम्मन्यतया स्वयमेकान्तमेव गतवान्। तत्र श्रीवेदव्यासस्तु तं वशीकर्त्तुं तदनन्यसाधनं श्रीभागवतमेव ज्ञात्वा, तद्गुणातिशयप्रकाशमयांस्तदीयपद्यविशेषान् कथञ्चित् श्रावयित्वा, तेन तमाक्षिप्तमतिं कृत्वा, तदेव पूर्णं तमध्यापयामासेति श्रीभागवतमहिमातिशयः प्रोक्तः। तदेवं दर्शितं वक्तुः श्रीशुकस्य वेदव्यासस्य च समानहृदयम्। तस्माद्वक्तुर्हृदयानुरूपमेव सर्वत्र तात्पर्य्यं पर्य्यालोचनीयम्, नाऽन्यथा। यद् यत्तदन्यथा पर्य्यालोचनम्, तत्र तत्र कुपथगामितैवेति निष्टङ्कितम्। १।७ श्रीसूतः॥

---

वैद्याभूषणो।

निर्गताहङ्कारेति। महत्तत्वजातोऽयमहङ्कारः, न तु स्वरूपानुबन्धीति बोध्यम्, द्वितीयसन्दर्भे एवमेव निर्णेष्यमाणत्वात्। तदीयपद्यविशेषानिति। पूतनाधात्रीगतिदानपाण्डवसारथ्यप्रतीहारत्वादिप्रदर्शकान् कतिचित् श्लोकानित्यर्थः। ब्रह्मवैवर्त्ते शुको योनिजातः, भारते त्वयोनिजातः कथ्यते, दारग्रहणं कन्यासन्ततिश्चेति। तदेतत् सर्व्वं कल्पभेदेन सङ्गमनीयम्॥

राधामोहनी।

निष्टङ्कितम्—ज्ञापितम्। 'तस्मात्' इत्यनेनास्याऽन्वयः। श्रीसूत इति संवादयतीति प्राक्तनेनाऽन्वयः॥

अथ क्रमेण विस्तरतस्तथैव तात्पर्य्यं निर्णेतुं सम्बन्धाभिधेय-प्रयोजनेषु षड्भिः सन्दर्भैर्निर्णेष्यमाणेषु प्रथमं यस्य वाच्यवाचकतासम्बन्धीदं शास्त्रम्, तदेव धर्म्मः प्रोज्झितकैतवेत्यादिपद्ये सामान्याकारतस्तावदाह—"वेद्यं वास्तवमत्र वस्तु" (भा० १।१।२) इति।

टीका च—"अत्र श्रीमति सुन्दरे भागवते वास्तवं परमार्थभूतं वस्तु वेद्यम्, न तु वैशेषिकादिवद् द्रव्यगुणादिरूपम्" इत्येषा ।

१ । १ । श्रीवेदव्यासः ॥

वैद्याभूषणी ।

संक्षेपेणोक्तं सम्बन्धादिकं विस्तरेण दर्शयितुमुपक्रमते—अथेत्यादि । तथैवेति । श्रीशुकादिहृदयानुसारेणेत्यर्थः । सामान्यत इति । अनिर्दिष्टस्वरूपगुणविभूतिकथनायेत्यर्थः । वैशेषिकादिवदिति । कणादगौतमोक्तशास्त्रवदित्यर्थः ॥

राधामोहनी ।

सम्बन्धः—वाच्यवाचकतालक्षणः, तत्र वाच्यतासम्बन्धि अभिधेयम्, तच्च द्विविधम्—वास्तवतत्त्वम्, वस्तुतत्त्वं च । वाचकतासम्बन्धि शास्त्रमिति विशेषतः सूतप्रोक्तम् । सामान्यतो व्यासेनोक्तमित्याह—अथेति । तथैव—निरुक्तै तत्प्रकारेणैव, निर्णेतुम्—ज्ञापयितुम्, अस्य 'निर्णेष्यमाणेषु' इत्यनेनाऽन्वयः । यस्य वाच्यवाचकतासम्बन्धीति । यन्निष्ठवाच्यतानिरूपितवाचकतासम्बन्धीत्यर्थः । आहेति । श्रीवेदव्यास इति परेणाऽन्वयः ॥

चिदेकरूपमिति । चिता ज्ञानेन एकरूपं स्वस्वरूपभूतज्ञानवदित्यर्थः ।

अथ किंरूपं तद्वस्तुतत्त्वमित्यत्राह--

"वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ॥" इति ।

( भा० १।२।११ )

ज्ञानम्--चिदेकरूपम् । अद्वयत्वञ्चाऽस्य स्वयंसिद्धतादृशा-तादृशतत्त्वान्तराभावात्, स्वशक्त्येकसहायत्वात्, परमाश्रयं तं

---

वैद्याभूषणी ।

स्वरूपनिर्देशपूर्वकं तत्त्वं वक्तुमवतारयति—अथ किमिति । स्वयंसिद्धेति । आत्मनैव सिद्धं खलु स्वयंसिद्धमुच्यते । "स्वयंदासास्त-पस्विनः" इत्यत्र तपस्विदास्यमात्मना तपस्विनैव सिद्धं प्रतीयते, तद्वत् । तादृशश्च परेशवस्त्वेव, न तु तादृशमपि जीवचैतन्यम्, न त्वतादृशं प्रकृति-काललक्षणं जडवस्तु, तदभावादद्वयत्वम् । तयोः स्वयंसिद्धत्वाभावः कुतः ? इत्यत्राह—परमाश्रयं तं विनेति । स्वशक्त्येकसहायेऽप्यद्वयपदं प्रयुज्यते धनुर्द्वितीयः पाण्डुरिति । ननु "वेदान्ते विज्ञानमानन्दं ब्रह्म"(बृ० ३।९।२८) इति विज्ञानानन्दस्वरूपं ब्रह्म पठ्यते, इह ज्ञानमिति कथम् ? तत्राऽऽह—

राधामोहनी ।

तदुक्तम्—"गुणैः स्वरूपभूतैस्तु गुण्यसौ हरिरीश्वरः ।" इति ।

अद्वयत्वं च—अद्वयपदवाच्यत्वं च, स्वतःसिद्धतादृशतत्त्वान्तराभावादिति । तथा च तादृशतत्त्वनिष्ठभेदाप्रतियोगित्वमेवाऽद्वयत्वमिति भावः । ननु प्रकृत्यादि-शक्तीनामपि तत्त्वता श्रूयते इति कथमद्वयत्वम् ? इत्यत आह—स्वशक्त्येकसहाय-त्वादिति । स्वाश्रितशक्तिरूपत्वात् प्रकृत्यादीनामपि तत्स्वरूपत्वात् प्रकृतेर्बहिर-ङ्गत्वेऽपि तस्याऽनित्यतया धर्मतया च ब्रह्मणैक्यमिति भावः । ननु प्रकृतेः कथं ध-

विना तासामसिद्धत्वाच्च । तत्त्वमिति परमपुरुषार्थताद्योतनया परमसुखरूपत्वं तस्य बोध्यते । अत एव तस्य नित्यत्वञ्च दर्शितम् । १ । २ । श्रीसूतः ॥

वैद्याभूषणी ।

तत्त्वमिति । इदमत्र तत्त्वमित्युक्ते सारे वस्तुनि तत्त्वशब्दो नीयते । सारञ्च सुखमेव, सर्वेषामुपायानां तदर्थत्वात् । तथा च सुखरूपत्वमपि तस्याऽऽगतम् । ननु ज्ञानं सुखञ्चाऽनित्यं दृष्टम्, तत्राह—अत एवेति । स्वयंसिद्धत्वेन व्याख्यानान्नित्यं तदित्यर्थः । "सदकारणं यत् तन्नित्यम्" इति हि तीर्थकाराः । एवञ्च तादृशब्रह्मसम्बन्धीदं शास्त्रमित्युक्तम् ॥

राधामोहनी ।

मेत्वम् ? इत्यत आह—परमाश्रयं तं विनेति । असिद्धत्वात्—अचेतनत्वेन कार्याक्षमत्वादिति भावः । तत्त्वमितीति । तत्पदप्रतिपाद्यं जगत्कर्तृरूपं वास्तवं वस्तुतत्त्वपदार्थः, वास्तवत्वं नित्यसत्त्वम्, आत्मपदबोध्यमपि तदेव । तस्य परमप्रेमास्पदत्वमाह श्रुतिः—"न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति" ( बृ० २।४।५ ) इत्युपक्रम्य "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" ( बृ० २।४।५ ) इत्यादिका । न चाऽत्रोपक्रमे आत्मपदं जीवपरमिति वाच्यम्, आत्मपदेनाऽऽत्मत्वेन बोधनात् परमप्रेमास्पदपरमात्मांशजीवात्मनोऽपि प्रेमास्पदत्वेन बोधनाद् । तदभिप्रायेणैव दशमे—

"ब्रह्मन् परोद्भवे कृष्णे इयान् प्रेमा कथं भवेत् ।"

इति परीक्षित्प्रश्नोत्तरतया शुकदेव आह—

"सर्वेषामपि भूतानां नृप ! स्वात्मैव वल्लभः ।"

इत्युक्त्वा, "कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।"

राधामोहनी ।

इत्युक्तम् । संसारिणां परमात्मानुभवविरहेणैव तथा प्रियतानुभवात् । तथा प्रियताबीजं च परमानन्दमयत्वेनेत्यभिप्रायं दर्शयति—परमपुरुषार्थद्योतनयेति । परमसुखत्वम्-निरतिशयस्वाभाविकसुखवत्त्वम्, तस्य ज्ञानस्य स्वाभाविकज्ञानवतः । एवं च ब्रह्मगतज्ञानसुखयोः ब्रह्मस्वरूपतया तयोरैक्यप्रवादः । अत एव ब्रह्मणो ज्ञानैकरूपतया कथनादेव तस्य ज्ञानस्य सुखस्य च नित्यत्वम् । न च तज्ज्ञानसुखयोरैक्यं वास्तवम्, 'जानामि' इत्यनुव्यवसायसिद्धज्ञानस्य आत्मधर्मस्य 'अहं सुखी' इत्यनुभवसिद्धात्मधर्मसुखस्य च मिथो वैलक्षण्यावगमात् । न चात्मधर्मत्वं तयोरारोपितम्, मानाभावात् । एवं च स्वाभाविकज्ञानसुखवत्स्वरूपत्वं तत्त्वस्य सिद्धम् । निरुक्तज्ञाने ज्ञानपदस्य निरुक्तसुखे सुखपदस्य शक्तेः सुप्रसिद्धतया "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २।१।१) इति "आनन्दं ब्रह्म" (सर्वोप० ३) इति श्रुतावपि तादृशज्ञानसुखयोर्ज्ञानानन्दपदाभ्यां बोधनात् तयोरात्मधर्मत्वानुभवादीश्वरेऽपि तयोर्धर्मत्वमेव "यः सर्वज्ञः" इत्यादिश्रुतौ—

"ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याऽव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥"

इति भगवद्वचने च बोधितमिति । ब्रह्मपदज्ञानपदानन्दपदानां सामानाधिकरण्यानुपपत्त्या ज्ञानपदानन्दपदयोः स्वाभाविकज्ञानवत्स्वाभाविकानन्दवत्परत्वावगमात् । तत्त्वपदयोरिवेति 'ब्रह्मणो हि' इत्यत्र ब्रह्मपदं धर्मपरम्, तेन ज्ञानस्येत्यर्थः। नीलकण्ठकृतटीकायाम् "ब्रह्मपदमत्र वेदपरम्" इति व्याख्यातम् । केचित्तु—

"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्" ॥ ( गी० १४।३ )

इति वचने ब्रह्मपदश्रवणात् "ब्रह्मणो हि" इत्यत्र ब्रह्मपदं प्रकृतिपरम्, सर्वत्र श्रुतौ श्रीभागवते च ब्रह्मकृष्णपदार्थयोरैक्यावगमाद्—इत्याहुः ॥

ननु नीलपीताद्याकारं क्षणिकमेव ज्ञानं दृष्टम्, तत् पुनरद्वयं नित्यं ज्ञानं कथं लक्ष्यते, यन्निष्ठमिदं शास्त्रमित्यत्राह—

"सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणम् ।

वस्त्वद्वितीयं तन्निष्ठम् ॥" ( भा० १२।१३।१२ ) इति ।

---

वैद्याभूषणी ।

आर्थिकं नित्यत्वं स्थिरं कुर्वन् शास्त्रस्य विशिष्टब्रह्मसम्बन्धित्वमाह—ननु नीलेत्यादिना । अनेन जीवेनेत्यादि । तदीयोक्तौ परदेवतावाक्ये । तदात्मांशविशेषत्वेन तद्विभिन्नांशत्वेन, न तु मत्स्यादिवत् स्वांशत्वेनेत्यर्थः । जीवात्मनो यदेकत्वमिति । जीवस्य चिद्रूपत्वेन जात्या यद् ब्रह्म-

राधामोहनी ।

इत्याहेति । 'श्रीसूतः' इति पूर्वेणान्वयः । 'इत्यत आह इति तदर्थः । 'तन्निष्ठम्' इत्यन्तमस्य कर्मत्वेनाऽन्वितम् । सर्ववेदान्तसारम्—सर्ववेदान्तेषु मुख्यत्वेनाभिहितम्, ब्रह्मणा सहाऽऽत्मनो जीवस्य यदेकत्वम्, तल्लक्षणं साधकतमं यस्य तत् ब्रह्मात्मैकत्वलक्षणम्, अद्वितीयम्—ब्रह्मनिष्ठाभावाप्रतियोगि । तन्निष्ठमिति । तत्परमिदं शास्त्रमित्यर्थः । तथा च ब्रह्मनिष्ठत्वमेवाऽद्वयत्वम्, न तु ज्ञाननिष्ठमिति प्राग्व्याख्यातार्थ एव सूताभिप्रेत इति भावः । सूतोक्तवचनं विशेषेण व्याकरोति—सत्यमित्यादि । येन अचिन्त्यशक्त्या, ब्रह्मणा श्रुतेन शब्दतः साक्षादश्रुतमपि सर्वं जगत् तात्पर्यवृत्त्या श्रुतं भवतीति "येन" इत्यादि श्रुतेरर्थः । अत्र दृष्टान्तश्रुतिर्यथा "सोम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातम् (छां० ६।१।४) इत्यादिरूपा । अत्र तद्दृष्टान्तेन जगदुपादानत्वं लभ्यते, उपादानधर्मस्यैव कार्ये दृश्यते, न तु कारणधर्मस्येति । न च ब्रह्मणश्चेतनस्य निरवयवस्य निर्विकारस्य

"सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २।१।१ ) इति यस्य स्वरूपमुक्तम्, "येनाऽश्रुतं श्रुतं भवति" ( छा० ६।१।३ ) इति यद्विज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्, "सदेव सोम्येदमग्र आसीत्" ( छा० ६।२।१ ) इत्यादिना निखिलजगदेककारणता, "तदैक्षत बहु स्याम्" ( छा० ६।२।३ ) इत्यनेन सत्यसङ्कल्पता यस्य प्रतिपादिता, तेन ब्रह्मणा स्वरूपशक्तिभ्यां सर्वबृहत्तमेन सार्द्धम्, "अनेन जीवेनात्मना" इति तदीयोक्ताविदन्तानिर्देशेन ततो भिन्नत्वेऽप्यात्मतानिर्देशेन तदात्मांशविशेषत्वेन लब्धस्य बादरायणसमाधिदृष्टयुक्तेरत्यभिन्नतारहितस्य जीवात्मनो यदेकत्वम्, "तत्त्वमसि" ( छा० ६।८।७ ) इत्यादौ ज्ञातं तदंशभूतचिद्रूपत्वेन स-

वैद्याभूषणी ।

समानाकारत्वम्, तदेव तस्य ब्रह्मणा सहैक्यमिति व्यक्तिभेदः प्रस्फुटः । एवमेव यथेत्यादिदृष्टान्तेनापि दर्शितः । तदेतदिति । उपनिषदः "सोऽ-

राधामोहनी ।

कथमचेतनजगदाकारेण परिणामः ? इति वाच्यम्, तादृशस्यापि ब्रह्मणो जगदुपादानप्रकृत्याख्यशक्त्याऽभेदस्यापि तादृशश्रुत्या ज्ञापनात्, शक्तिशक्तिमतोरभेदात् । न च तादृशशक्तेः परिणामितयाऽनित्यत्वादचेतनत्वाच्च तस्या न ब्रह्मणा सहैक्यमिति वाच्यम्, यथैकस्मिन् शरीरे करचरणादितत्तदवयवभेदः पारमार्थिकः, तथा मिथोविलक्षणसम्बन्धकरचरणाद्यवयवसमुदायाभेदोऽपि, समुदायस्य प्रत्येकानतिरेकात् । एवं प्रत्येकावयवे शरीरभेदो वर्त्तते, न तु समुदाये इति प्रतियोगितावच्छेदकानुयोगितावच्छेदकभेदेनाऽभेदभेदयोरेकत्र सत्त्वात्, तथा चेतनाचेतनत्वा-

मानाकारता, तदेव लक्षणं प्रथमतो ज्ञानं साधकतमं यस्य, तथा-भूतं यत् सर्ववेदान्तसारमद्वितीयं वस्तु, तन्निष्ठं तदेकविषयमिदं

वैद्याभूषणी ।

भ्यां मिथो ब्रह्मतच्छक्त्योर्भेदेऽपि धर्मधर्मिभावापन्नयोस्तयोरैक्यमव्यभिचारि, सम्बन्धादिति । प्रकृतेर्नित्यत्वमपि, "पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष नाक आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद्विश्वरूपः" इति माध्वभाष्य-धृतश्रुत्या ब्रह्मणः प्रकृतिरूपताबोधनात्

"पराऽस्य शक्तिर्विविधैव श्रूयते ।
स्वाभाविकी ज्ञानबलक्रिया च ॥" ( श्वे० ६।८ ) इति श्रुतेश्च ।

तत्र स्वाभाविकत्वम् । स्वरूपभूतत्वम् । यद्वा, ब्रह्मणो जगदुपादानप्रकृतिर्भिन्नैव, अभेदप्रत्ययस्त्वौपचारिकः । तथा च माध्वभाष्यधृतवचनम्—

"अविकारो हि भगवान् प्रकृतिं तु विकारिणीम् ।
अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते ॥" इति ।

"अथैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार, तस्मात् प्रकृतिरिति व्याचक्षते" इति माध्वभाष्यधृतभाल्लवेयश्रुतेश्चेति । "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिविशन्ति, तद् ब्रह्म विजिज्ञासस्व" ( तै० ३।१।१ ) इति श्रुतौ यद् ब्रह्मनिलयश्रवणं तद् विश्वलयाश्रयप्रकृतिलयाभि-प्रायेण, "अक्षरं तमसि लीयते, तमः परे देवे एकीभवति" इति श्रुतेः ।

"एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते ।
प्रकृतिः पुरुषः कालस्त्रय एते विभागतः ॥
चतुर्थश्च महान् प्रोक्तः पञ्चमोऽहङ्कृतिस्तथा ।
तद्विभागेन जायन्ते आकाशाद्याः पृथक् पृथक् ॥

श्रीभागवतमिति प्राक्तनपद्यस्थेनाऽनुषङ्गः । यथा जन्मप्रभृति कश्चिद् गृहगुहावरुद्धः सूर्य्यं विविदिषुः कथञ्चिद्गवाक्षपतितं सूर्य्या-

वैद्याभूषणी ।

यो विभागी विकारः सः सोऽविकारी हरिः परः ।
अविभागात्परानन्दो नित्यो नित्यगुणात्मकः ॥"

इति माध्वभाष्यधृतबृहत्संहितावचनाच्च । एवं च "येनाऽश्रुतं श्रुतं भवति" ( छा० ६।१।३ ) इति प्रतिज्ञातश्रुतितदृष्टान्तश्रुतिभ्यां साक्षादनिर्देश्यपरब्रह्मोपासनायामुपास्यतावच्छेदकरूपजिज्ञासायां तादृशरूपप्रदर्शनम् । तथाहि "मायी विश्वं सृजते" इत्यादिश्रुतिसहकारेण निरुक्तप्रतिज्ञाश्रुत्या जगदुपादानत्वेन ब्रह्मबोधने साक्षात्तद्बोधात् 'शिखी विनष्टः' इत्यादिवद् विशेषणीभूतमायायां जगदुपानत्वं बोध्यते । तेन—जगदुपादानमायाश्रयत्वेन ब्रह्मोपास्यम्, सर्वाधारत्वेन ज्ञानसुखमयत्वेन सर्वनिमित्तकारणत्वेन ब्रह्मैव नित्यमुपादेयम्, मायाया अचेतनत्वेनाऽसुखत्वेन तत्कार्यस्य जगतस्तथाभूतत्वेनाऽनित्यत्वेन चानुपादेयत्वं च आयातमिति ।

"मायाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्" ।

इत्यनेन ब्रह्मणो निमित्तता, प्रकृतेश्चोपादानताबोधनात्, "इन्द्रो मायाभिः पुरुरूप ईयते" ( बृ० २।५।१९ ) इति श्रुतेश्च । "सर्वं खल्विदं ब्रह्म" ( छा० ३।१४।१ ) इत्यादिश्रुतिरपि ब्रह्माधिष्ठितत्वेन ज्ञानशक्तिमयत्वेन चोपपद्यते । सदेवेति इदं जगत्, अग्रे सदेवासीत् सद्रूपे लीनमासीदित्यर्थः । तेन जगत्कारणताऽपि लक्ष्यते, उपादानकारण एव कार्यलयश्रवणात् । आदिपदेन "यतो वा इमानि भूतानि जायन्ते" ( तै० ३।१।१ ) इत्यादिश्रुतिपरिग्रहः । सत्यसङ्कल्पतेति—अप्रतिरुद्धज्ञानवत्त्वेत्यर्थः । यस्येति यत्पदद्योतितं परामृश्य तदर्थं विवृणोति—तेन ब्रह्मणेति । स्वरूपम्—ज्ञानसुखादि, शक्तिः—जगदुपादानमायादि, ताभ्यां सर्वबृहत्तमेन सर्वत उत्तमेन, सार्धमित्यस्य यदेकत्वमिति परेणाऽन्वयः । अनेन

राधामोहनी ।

जीवेनाऽऽत्मनेत्यादितदीयोक्तौ "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" ( छा० ६।३।२ ) इत्यादिश्रुतिवचने, इदन्तानिर्देशेन—'अनेन' इति 'इदं'पदेनापरोक्षत्वनिर्देशेन, ततो भिन्नत्वेऽपि—परोक्षब्रह्मसकाशाद्भिन्नत्वसिद्धावपि, आत्मतानिर्देशेन—'आत्मना' इत्यात्मपदेन चेतनत्वनिर्देशेन, इदं चात्मांशविशेषत्वे हेतुः । तदात्मांशविशेषत्वेन ब्रह्मांशविशेषत्वेन अनुप्रविश्य "नामरूपे व्याकरवाणि" इति ,वाक्यसमभिव्याहृतात्मपदेन कर्तृभूतब्रह्मणा एवात्मीयत्वरूपांशत्ववोधनादिति भावः । लब्धस्येति । 'जीवेन' इति श्रुतिपदेनेत्यादिः, 'जीवात्मनः' इति परेणास्याऽन्वयः । ब्रह्मजीवयोर्भेदे प्रागुक्तयुक्तिमपि स्मारयति—वादरायणेति । अत्यभिन्नतेति धर्मधर्मिभावतया भेदोऽप्यतिशब्देन सूचितः । तदेकत्वमिति । ब्रह्मनिष्ठैकत्वस्य जीवात्मनि वाधितत्वात् । तद्वाक्यैकवाक्यतया इत्यादौ एकपदस्य समानाकारकतापरत्वस्य सर्वमतसिद्धतयाऽत्राप्येकपदस्य समानाकारपरतामाह—तदंशचिद्रूपत्वेनेति । अभेदे तृतीया, तदंशचिद्रूपत्वरूपसमानाकारतेत्यर्थः । तदंशत्वम्—तद्धर्मत्वम् , तत्पदम्—ब्रह्मपरम् , चिद्रूपत्वम्-चेतनत्वम् । तथा च तद्धर्मत्वे सति चेतनत्वमेकपदेन विवक्षितम् । यद्वा, तदंशत्वम्—तन्निष्ठभेदप्रतियोगितावच्छेदकाणुत्वम् । तथा च ब्रह्मनिष्ठभेदप्रतियोगितावच्छेदकाणुत्वे सति चेतनत्वमत्र समानाकारत्वं सादृश्यपर्यवसितम् ।

अत्र श्रुतिं संवादयति—"तत्त्वमसि" इत्यादिश्रुतौ ज्ञातेति, 'तत्' पदमत्र "येनाऽश्रुतं श्रुतं भवति" इत्यादिप्रागुपदर्शितब्रह्मसदृशे लाक्षणिकम् , ब्रह्माभेदस्य 'त्वं' पदवाच्यवोधितत्वात् । 'सोऽयं गकारः' । 'तदौपधमिधम्' इत्यादौ 'तत्' पदस्य प्राग्बुद्धिस्थसदृशपरत्वदर्शनाच्च । साधकतममिति । ज्ञापकमित्यर्थः । सर्ववेदान्तसारं प्रागदर्शितोपनिषत्प्रतिपाद्यम् । साधकतमत्वं दर्शयति—तथेति । एष स इति । एष सूर्यांशतेजोमय इत्यर्थः । तथा चैतज्ज्ञानमुपमानविधया 'सूर्य एतादृशो महान्' इति ज्ञानं जनयति । एवमत्रापि 'त्वं ब्रह्मांशचिद्रूपः' इति ज्ञानमुपमानविधया 'ब्रह्म त्वत्सदृशम्' इति ज्ञानजनकमित्यर्थः । त्वत्सादृश्यं च चिद्रूपत्वे सति सर्वव्-

शुकणं दर्शयित्वा केनचिदुपदिश्यते एष स इति, एतत्तदंशज्योतिःसमानाकारतया तन्महाज्योतिर्मण्डलमनुसन्धीयतामित्यर्थस्तद्वत्। जीवस्य तथा तदंशत्वञ्च तच्छक्तिविशेषसिद्धत्वेनैव परमा-

---

दैद्याभूषणी।

कामयत बहु स्याम्" (तै० २।६) इत्याद्याः। निरंशत्वोपदेशिकेति। "सत्यं

राधामोहनी।

हत्तमत्वमिति। यद्वा, 'अनुसन्धीयते' इत्यनेन 'अनुमीयते' इत्यर्थः। अनुमानाकारश्च—सूर्यः एतत्सदृशमहाज्योतिर्मण्डलरूपः, एतदंशित्वे सति ज्योतिर्मयत्वादित्यादिरूप इति। तद्वदिति, जीवस्य यद् ब्रह्मसादृश्यं तदपि ब्रह्मज्ञापकम्, यथा ब्रह्म निरतिशयचेतनम्, त्वंपदवाच्यत्वांशित्वे सति चेतनत्वात्, इत्यादिरूपमनुमानमित्यर्थः। ननु ब्रह्मणो निरवयवस्य सर्वव्यापकस्यैकस्य जीवे कथमंशत्वसम्भवः ? इत्यत आह—तदंशत्वञ्च इति। तदचिन्त्यशक्तिविशेषसिद्धत्वेनेति—अचिन्त्यशक्तिविशेषो योगमायादिः तत्सिद्धत्वेनेत्यर्थः। तथा च 'अचिन्त्यशक्त्याऽनन्तजीवाश्रयः' इति जीवानामपि शक्तित्वात् तद्विशिष्टब्रह्मणोऽपि परमात्मपदवाच्यत्वात् तद्विशेषेण जीवानामपि परमात्मत्वमुपचर्यते इति जीवस्य सर्वशक्तिविशिष्टपरमात्मांशत्वम्, 'एव'कारेण केवलब्रह्मांशत्वव्यवच्छेद इति। तथा च "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः, सति विशेष्ये बाधे" इति न्यायेन विशेषणीभूतशक्तीनामेकस्य जीवस्य, "ममैवांशो जीवः" इति भगवद्वचनादौ तदंशत्वेन बोधनम्, यथा साधारणधनानां प्रत्येकं धनस्य लोकेंऽशत्वेन व्यवहारः। न तु चिद्घनानन्दस्वरूपैकदेशत्वरूपमंशत्वं तत्र बोध्यते, असम्भवादिति भावः। एवं योगमायादिशक्तीनामपि शक्तिविशिष्टनिरूपितमेव अंशत्वं बोध्यम्। तदिति जीवानां जीवाख्यशक्तिविशिष्टब्रह्मनिरूपितांशत्वादेवेत्यर्थः। ब्रह्मणोऽपि जीवादिलक्ष-

त्मसन्दर्भे स्थापयिष्यामः । तदेतज्जीवादिलक्षणांशविशिष्टतयैवो-पनिषदस्तस्य सांशत्वमपि क्वचिदुपदिशन्ति । निरंशत्वोपदेशिका श्रुतिस्तु केवलतन्निष्ठा । अत्र कैवल्यैकप्रयोजनमिति चतुर्थपादश्च

वैद्याभूषणी ।

ज्ञानमनन्तम्" (तै०२।१) "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" ( श्वे० ६।१९ ) इत्याद्या श्रुतिस्तु केवलतन्निष्ठा विशेष्यमात्रपरेत्यर्थः, अनभिव्यक्तसंस्थानगुणकं ब्रह्म वदतीति यावत् ॥

राधामोहनी ।

णांशविशिष्टतयैव—तद्वैशिष्ट्यावच्छेदेनैव,तस्य—ब्रह्मणः, अंशित्वमुपनिषदः क्वचिदु-पदिशन्तीत्यर्थः । केवलतन्निष्ठेति । शक्त्यनवच्छिन्नब्रह्मनिष्ठेत्यर्थः । अत्र केचित् "ब्रह्मात्मैकत्वलक्षणम्" इत्यस्य द्वन्द्वोत्तरत्वप्रत्ययेन ब्रह्मत्वात्मत्वैकत्वानि लभ्य-न्ते, तानि लक्षणानि विशेषणानि यस्य तदित्यर्थः । तत्र ब्रह्मत्वम् "सत्यं ज्ञानम-नन्तं ब्रह्म" ( तै० २। १। १ ) "विज्ञानमानन्दं ब्रह्म" ( वृ० ३। ९। २८ ) इत्यादिश्रुत्या स्वाभाविकज्ञानसुखादिमत्स्वरूपं बोध्यम् । आत्मत्वम्—"एष आत्मा-न्तर्याम्यमृतम्" ( वृ० ३। १। ३ ) इत्यादिश्रुत्या,

"अहमात्मा गुडाकेश सर्वभूताशये स्थितः ।" ( गीता १०।२० )

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥

यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।" (गी० १५।१७)

इत्यादिश्रुत्या सर्वनियन्तृत्वादिरूपम् । एकत्वं च मुख्यत्वम्, निरतिशय-त्वमिति यावत्, "एकमेवाद्वितीयम्" इत्यादिश्रुतेः । अद्वयत्वं च असमत्वम्, "स्वयन्त्वसाम्यातिशयस्त्र्यधीशः" इत्यादिश्रीभागवतात् "वस्तु वसत्यस्मिन्

कैवल्यपदस्य शुद्धत्वमात्रवचनत्वेन शुद्धत्वस्य च शुद्धभक्तित्वेन पर्य्यवसानेन प्रीतिसन्दर्भे व्याख्यास्यते । १२।१३ श्रीसूतः ॥

---

राधामोहनी ।

सर्वम्'' इति व्युत्पत्त्या सर्वाधारमिति समुदितार्थः । यद्वा, ब्रह्मेति विशेष्यम्, आत्मैकत्वलक्षणमिति विशेषणम् । तदर्थश्च—आत्मनः जीवस्य स्वेन एकत्वं लक्षयति प्रापयति स्वोपासनद्वारा इति आत्मैकत्वलक्षणम्, "सर्वे एकीभवन्ति" ( मु० ३।२।७) इति "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः, तत्रैकत्वं वास्तवमिति । द्वैताद्वैतवादिनस्तेषां संसारितादशायां भेदः, मुक्तत्वदशायां भेदाभावः, इति कालविशेषावच्छेदेनैकत्रैव जीवानां भेदस्वीकारात्, वस्तुतः "निरञ्जनः परमं साम्यमुपैति" ( मु० ३।१।३ ) इत्यादिश्रुत्यन्तरैकवाक्यतया युक्त्या च साम्यरूपमेकत्वं ब्रह्मणि जीवानां मुक्ततादशायां स्वीकारः । साम्यं च स्वरूपावस्थानात्यन्तिकदुःखाभावनित्यसुखसाक्षात्काररूपम् । एवं ब्रह्मणि जीववैशिष्ट्यमपि नाधाराधेयभावरूपसम्बन्धः, किन्तु गगने भूतसम्बन्धवत् सम्बन्धमात्रं बोध्यते, "आकाशवत्सर्वगतं सुसूक्ष्मम्" इति श्रुतेः । स च सम्बन्धः पुष्करपलाशे जलसम्बन्धवत् एकतानापादक इति । ब्रह्मणोऽसङ्गत्वश्रुतिसङ्गतिः सङ्गशब्देन सम्यक्सम्बन्धस्यैकतापादकस्य विलक्षणस्य बोधनात् निर्विकारस्य ब्रह्मणस्तदसम्भवाच्च । तत्त्वमस्यादिवाक्यानि च "अहं ब्रह्मास्मि" ( क० १।४।१० ) इति भावनामयोपासनातात्पर्यकाणि, तथोपासकानां 'कीटपेशस्कृत्' न्यायेन निरुक्तब्रह्मैक्यलाभो भवतीति प्राहुः । अत्रेति "सर्ववेदान्तसारम्" इत्यादिसूतवचने इत्यर्थः। कैवल्यशब्दस्यैकत्वे ब्रह्मैकत्वपर्यवसन्ने जीवस्य मायाकृतोपाधित्यागेन स्वरूपावस्थानरूपशुद्धत्वे च मुख्यतया मुक्तिपरत्वमेव यद्यप्यायाति, तथाप्यस्मिन् मुक्तेरप्यधिकतया प्रेमाख्यभक्तेरुक्ततया तत्परतामाह—कैवल्यपदस्येत्यादि । शुद्धभक्तत्वदशायामपि मायाराहित्यरूपशुद्धसत्त्वेन सामान्यशब्दविशेषपरत्वाभिप्रायेण तत्पर्यवसानत्वमुक्तम्, मुख्यार्थैकपदस्वरसात् मुक्तिप्रयोजकत्वमपि बोध्यम् ॥

तत्र यदि त्वम्पदार्थस्य जीवात्मनो ज्ञानत्वं नित्यत्वञ्च प्रथमतो विचारगोचरः स्यात्, तदैव तत्पदार्थस्य तादृशत्वं सुबोधं स्यादिति तद्बोधयितुम् "अन्यार्थश्च परामर्शः" (ब्र०सू० १।३।२०) इति न्यायेन जीवात्मनस्तद्रूपत्वमाह—

वैद्याभूषणी ।

'जीवात्मनि ज्ञाते परमात्मा सुज्ञातः स्यात्' इत्युक्तम्, तदर्थं जीवात्मानं निरूपयिष्यन्नवतारयति—तत्र यदीत्यादिना । अन्यार्थश्चेति ब्रह्मसूत्रम् । दहरविद्या छान्दोग्ये पठ्यते । "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम् ।" (छा० ८।१।१) इति । अत्रोपासकस्य शरीरं ब्रह्मपुरम्, तत्र हृत्पुण्डरीकस्थो दहरः परमात्मा ध्येयः कथ्यते । तत्राऽपहतपाप्मत्वादिगुणाष्टकमन्वेष्टव्यमुदिश्यते इति सिद्धान्तितम् । तद्वाक्यमध्ये "स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" (छा० ८।१२।३) इति वाक्यं पठितम् । अत्र सम्प्रसादो लब्धविज्ञानो जीवस्तेन यत् परं ज्योतिरुपपन्नं स एव पुरुषोत्तम इत्यर्थः । दहरवाक्यान्तराले जीवपरामर्शः किमर्थमिति चेत्, तत्राह— अन्यार्थ इति । तत्र जीवपरामर्शोऽ-

राधामोहनी ।

ज्ञानत्वम्—चिद्रूपत्वं चेतनमिति यावत् । नित्यत्वं विना ब्रह्मांशत्वं न सिध्यतीत्यभिप्रायेणाह—नित्यत्वमिति । तस्य ब्रह्मणः, तादृशत्वं निरुक्तजीवतुल्यत्वं तद्बोध-

"नाऽऽत्मा जजान न मरिष्यति नैधतेऽसौ
न क्षीयते सवनविद् व्यभिचारिणां हि ।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं
प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥"
( भा० ११।३।३८ )

आत्मा—शुद्धो जीवः, न जजान—न जातः, जन्माभावादेव तदनन्तरास्तितालक्षणो विकारोऽपि नास्ति । नैधते—न वर्द्धते, वृद्ध्यभावादेव विपरिणामोऽपि निरस्तः । हि यस्माद् व्यभिचारिणामागमापायिनां बालयुवादिदेहानां देवमनुष्याद्याकारदेहानां वा सवनवित् तत्तत्कालद्रष्टा, नह्यवस्थावतां द्रष्टा तदवस्थो भवतीत्यर्थः । निरवस्थः कोऽसावात्मा ? अत आह—उपलब्धिमात्रम्—ज्ञानैकरूपम् । कथम्भूतम् ? सर्व्वत्र देहे शश्वत् सर्व्वदाऽनुवर्त्तमान-

---

वैद्याभूषणी ।

न्यार्थः । यं प्राप्य जीवः स्वस्वरूपेणाभिनिष्पद्यते, स परमात्मेति, परमात्मज्ञानार्थ इत्यर्थः । न जजानेति । जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, नश्यति चेति भावविकाराः षट् पठितास्ते जीवस्य न सन्ति

राधामोहनी ।

धयितुमिति । अन्यार्थः—तदन्यार्थः, परामर्श्यः 'परामृश्यते' इति व्युत्पत्त्या परामर्शविषयः, निरूपणविषय इति यावत् । नात्मेति । शरीरविशिष्टस्य जन्यत्वव्यवहारेणाह—शुद्ध इति । तदनन्तरास्तित्वलक्षणेति । जन्यानामपि जन्मपूर्वं सत्तानामास्तित्वाभावादाह—तदनन्तरेति । विपरिणामः—रूपान्तरापत्तिः ह्रासश्च, ज्ञानैकरूपमिति स्वाभा-

मिति। ननु नीलज्ञानं नष्टम्, पीतज्ञानं जातम्, इति प्रतीतेर्न ज्ञानस्याऽनपायित्वम्, तत्राह—इन्द्रियबलेनेति। सदेव ज्ञानमेकमिन्द्रियबलेन विविधं कल्पितम्। नीलाद्याकारा वृत्तय एव जायन्ते नश्यन्ति च, न ज्ञानमिति भावः। अयमागमापायितदवधिभेदेन प्रथमस्तर्कः। द्रष्टृदृश्यभेदेन द्वितीयोऽपि तर्को ज्ञेयः। व्यभिचारिष्ववस्थितस्याऽव्यभिचारे दृष्टान्तः, प्राणो यथेति ॥

---

वैद्याभूषणी ।

इति समुदायार्थः। ननु नीलज्ञानमित्यादिज्ञानरूपमात्मवस्तु ज्ञातृ भवति, प्रकाशवस्तु सूर्य्यः प्रकाशयिता यथा। ततश्च स्वरूपानुबन्धित्वाद् ज्ञानं तस्य नित्यम्, तस्येन्द्रियप्रणाल्या नीलादिनिष्ठा या विषयता वृत्तिपदवाच्या, सैव नीलाद्यपगमे नश्यतीति ॥

राधामोहनी ।

विकज्ञानवत्। एतेन जीवज्ञानस्यापि नित्यत्वम्, जीवस्य महत्त्वं नास्तीति ब्रह्मतो भेदः। ज्ञानस्यानपायित्वमिति। ज्ञानस्यापायित्वे नित्यस्य जीवस्य न ज्ञानस्वभावतासम्भव इति भावः। विविधं कल्पितमिति। इन्द्रियाणां विषयसम्बन्धेन जायमानविषयविशेषाकारमनोवृत्तिवैशिष्ट्येन विविधं कल्पितम्, न तु वास्तवम्। विशेषेण जन्मविनाशाभिप्रायेण विशिष्टज्ञानजन्यनाश इति। नीलाद्याकारा इति। देहस्यागमापायधर्मः। आत्मनश्च तद्बाधः। तदभावः इति। विरुद्धधर्मयोरेकत्र समावेशाभावरूपस्तर्कस्तयोर्भेदसाधक इत्यर्थः। द्रष्टृत्वम्—स्वपरप्रकाशकज्ञानवत्त्वम्, दृश्यत्वम्—अन्यनिष्ठज्ञानप्रकाश्यत्वम्। अचेतनत्वमिति। तयोर्विरोधनिबन्धनस्तयोर्भेदसाधको द्वितीयस्तर्क इति श्लोकेनानेन सूचित इति भावः ॥

दृष्टान्तं विवृण्वन्निन्द्रियादिलयेन निर्व्विकारात्मोपलब्धिं दर्शयति—

"अण्डेषु पेशिषु तरुष्वविनिश्चितेषु
प्राणो हि जीवमुपधावति तत्र तत्र ।
सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते
कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥"
( भा० ११।३।३९ )

अण्डेषु—अण्डजेषु । पेशिषु—जरायुजेषु । तरुषु—उद्भिज्जेषु । अविनिश्चितेषु-स्वेदजेषु । उपधावति—अनुवर्त्तते । एवं दृष्टान्ते निर्विकारत्वं प्रदर्श्य दार्ष्टान्तिकेऽपि दर्शयति—कथम् ? तदैवात्मा सविकार इव प्रतीयते, यदा जागरे इन्द्रियगणः, यदा च स्वप्ने तत् संस्कारवानहङ्कारः । यदा तु प्रसुप्तम्, तदा तस्मिन्

---

दैधाभूषणी ।

दृष्टान्तमिति । प्राणस्य नानादेहेष्वैकरूप्यान्निर्विकारत्वमित्यर्थः । तस्मिन् आत्मनि । उपाधेर्लिङ्गशरीरस्याभावाद्विश्लेषादित्यर्थः । तदाप्यतिसूक्ष्माया वासनायाः सत्त्वान्मुक्तेरभाव इति ज्ञेयम् । प्राकृताहङ्कारे

राधामोहनी ।

सविकार इवेति । मनोवृत्तिसम्बन्धेन सविकार इव प्रतीयते, न तु तत्प्रतीतिर्वास्तविकीति भावः । वास्तवविकाराभावं दर्शयितुमाह—यदा तु प्रसुप्तमिति । निर्विकार इति । तथा च तदानीं विकारहेतोरभावात् स्वाभाविकज्ञानेनैव परमात्मा-

प्रसुप्ते, इन्द्रियगणे सन्ने—लीने, अहमि—अहङ्कारे च सन्ने—लीने, कूटस्थो—निर्विकार एवात्मा। कुतः ? आशयमृते—लिङ्गशरीरमुपाधिं

---

वैद्याभूषणी ।

लीनेऽपि स्वरूपानुबन्धिनोऽहमर्थस्य सत्त्वात्तेन सुखमहमस्वाप्समिति वि-

राधामोहनी ।

नुभावो वक्तव्य इति तज्ज्ञानस्यैव जाग्रत्स्वप्नदशायां मनोवृत्तिवैशिष्ट्येन विषयप्रकाशकत्वम्, न तु तदानीमात्मनि ज्ञानं जायत इति निर्विकारत्वमात्मन इति भावः । सुपुप्तिसाक्षिणः—सुपुप्तिदशायां जीवं स्वसुखमनुभावयितुर्ब्रह्मणः । श्रुतौ पश्यन्निति 'परमात्मानम्' इत्यादि । सुखम्—ब्राह्मं सुखम् । सुखान्तरस्य सामग्रीविरहेण तदानीमभावात्,

"आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम् ।" इति श्रुतेः ।

"सता सौम्य तदा सम्पन्नो भवति", (छा०६।८।१) "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" (बृ०४।३।२१) इति । अत्र सुपुप्तस्याधारतया प्रसिद्धो जीवादर्थान्तरभूतः । "प्राज्ञः परमात्मा" इति रामानुजभाष्यम् । अस्य परमात्मनस्तदानीं जीवसुखानुभवहेतुत्वात्, तदानीं श्वासहेतुप्राणे सञ्चारहेतुत्वात्, पुनर्जागरणहेतुशब्दश्रवणादिबोधहेतुत्वाच्च साक्षित्वम् । जीवस्य च तन्नियम्यत्वेन साक्ष्यत्वमिति तयोर्विरोधनिबन्धनस्तर्कः परमात्मजीवात्मनोर्भेदसाधकः । अत्रेदमवधेयम्, सुपुप्तौ देहेन्द्रियादेर्लयोऽद्वैतमतम्, वस्तुतस्तेषां लयोत्थापने गौरवान्मानाभावाच्च । एवं च 'सन्ने' इत्यस्य क्रियारहिते इत्यर्थः, तत्क्रियाहेत्वात्ममनोयोगविरहात् । अहमि—अन्तःकरणे, मनसीति यावत् । प्रसुप्ते—पुरीतन्नाड्यां गत्वा निश्चलतया स्थिते । "अथ सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीत-

राधामोहनी।

तमभिप्रतिष्ठन्ते। ताभिः प्रत्यवसृत्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणो वातिघ्नीमानन्दस्य गत्वा शयीतैवमेष एतच्छेते।" ( बृ०२।१।१ ) इति बृहदारण्यकोपनिषदः। तदानीं मनसात्मसंयोगाभावान्न ज्ञानसुखादिरूपमनोवृत्त्युत्पत्तिरिति तदानीं ब्रह्मसुखानुभवः, तद्विरोधिमायाकृतावरणाभावात्। एवं सूर्यस्य प्रकाशात्मत्वं न प्रकाश्यत्वम्, प्रकाशप्रकाशिनोर्भेदप्रतीतेः। किन्तु पृथिव्यादेर्न स्वतः प्रकाशः, किन्तु तैजसालोकसम्बन्धात् काचित्कः। सूर्यादेस्तु स्वतः प्रकाशः सार्वदिकः, इत्येवं स्वाभाविकप्रकाशप्रचुरः सूर्य इति। तथा च जीवस्यापि न ज्ञानरूपता, ज्ञानस्य निष्क्रियतया "आत्मनो व्युच्चरन्ति" इति श्रुतिसिद्धव्युच्चारणासम्भवात किन्तु स्वाभाविकज्ञानवत्ता यथा ब्रह्मणः। तत्र ब्रह्मजीवयोर्नैकं ज्ञानम्, "तस्य भासा सर्वमिदं विभाति" ( मु०२।२।१ ) "यः सर्वज्ञः सर्ववित्" ( मु०२।३।१ ) इत्यादिश्रुत्या "जीवोऽल्पशक्तिरल्पज्ञः" इत्यादिश्रुत्या च तयोर्ज्ञानवैलक्षण्यावगमात्। एवं ब्रह्मज्ञानस्याऽप्रतिरुद्धत्वम्, जीवस्य च मायाप्रतिरुद्धज्ञानत्वम्, "तज्ज्योतिषां ज्योतिः" ( बृ० ४।४।१६ ) इत्यादिश्रुत्या ब्रह्माधीनज्ञानत्वं चेति जीवानामपि मिथो विभिन्नज्ञानत्वं सकलज्ञानसाधारणमेकं ज्ञानत्वमादाय ब्रह्मजीवयोः साजात्यं वर्णनीयम्। अथ जीवात्मनः किं बाह्यविषयकमनःपरिणामविशेषवृत्त्याख्याकल्पनेनात्मन्येवात्ममनःसंयोगादिना ज्ञानोत्पाद एव स्वीक्रियते। न चात्मनो विकारित्वापत्तिरिति वाच्यम्, प्रतिबिम्बपक्षस्याऽवच्छेदकपक्षस्य च दूषितत्वात्। मनोवृत्तिपक्षेऽपि जीवात्मनि तत्सम्बन्धस्वीकार आवश्यकः; कथमन्यथा तदुपहितत्वं जीवज्ञानस्येति। तत्सम्बन्धस्यापि जन्यतया जन्यधर्मानाश्रयत्वरूपं निर्विकारत्वं वक्तुमशक्यम्, किन्तु जन्म–मरण–ह्रास–वृद्धिरूपान्तरापत्तिरूपविकारशून्यत्वं वक्तव्यम्। तच्चात्मनि ज्ञानसुखाद्युत्पादेऽपि न क्षतिः। सुषुप्तिदशायां च ज्ञानोत्पादकसामग्रीविरहे नित्यज्ञानान्तरमपि स्वीकार्यम्, संसारितादशायां तत्सत्त्वेऽपि ज्ञानान्तरोत्पत्तौ बाधकाभावात तदानीं मायाया असत्कल्पत्वात्। सुषुप्तिदशायां मुक्तादशायां च नानाज-

राधामोहनी ।

न्यज्ञानकल्पने गौरवात् । संसारितादशायां ज्ञानस्य कादाचित्कतया प्रामाणिकत्वात् नानाकल्पने न दूषणम् । न च जीवस्य ब्रह्मसाक्षात्कारज्ञानस्वप्रकाशताभङ्ग इति वाच्यम् , जीवस्य तदधीनज्ञानत्वेनापि स्वप्रकाशतोपपत्तेः, "भक्त्याऽहमेकया ग्राह्यः" इति वचनबलात् तथा कल्पनात् । एवं जीवस्य जन्यज्ञानानभ्युपगमे संस्कारानाश्रयत्वमप्यात्मनो वाच्यम् इति, सुषुप्तौ ब्रह्मानुभवेन कुत्र संस्कारो जननीयः ? संस्काराजनने सुषुप्त्यनन्तरम् "सुखमहमस्वाप्सम्" इति स्मरणानुपपत्तिः, स्मृतेः संस्कारजन्यत्वात् । न च सुषुप्तौ मायावृत्तिभिरतिसूक्ष्माभिरावरकज्ञाननिवृत्त्यात्मसाक्षात्कार इति वाच्यम्, मायावृत्तिजनितसंस्कारस्य विद्यायामेव सम्भवेन मनसि तदसम्भवेन च जाग्रद्दशायाम् "सुखमहमस्वाप्सम्" इति स्मरणस्य मनस्यसम्भवात् । न च सुषुप्तौ मनोवृत्तिरप्यस्ति, संस्कारोऽपि मनस्येव कल्पनीयः, मुक्तौ ब्रह्मसुखानुभवानुरोधेन नित्यज्ञानस्याप्यङ्गीकारादिति वाच्यम्, सुषुप्तौ तु शुद्धज्ञानेनैव ब्रह्मसुखविषयीकरणस्य श्रुतत्वात् अन्तःकरणवृत्त्युपहितचैतन्येन तद्विषयीकरणे वृत्तेरपि तत्र ज्ञानस्वीकारे द्वैतभानापत्तेः । यदि च सुषुप्तौ न मनसो लयः, अभिमानव्यापारकाहङ्कारस्यैव लय इति, तदानीं स्थूलसूक्ष्मदेहाभिमानविरहेणेतरविषयाग्रहणं ब्रह्माकारावृत्तिर्मनसो जायते इत्युच्यते, तदापि निरुक्तज्ञानादुत्पत्तिस्वीकारे यथाश्रुतसंसारितामुक्ततयोरुपपत्तेरिति । किं मनोवृत्तिवैशिष्ट्यकल्पनया तयोरुपादानस्याऽयुक्तत्वापत्तेरिति ।

"मनसो वृत्तयो नः स्युः कृष्णपादयुगाश्रयाः ।" ( भा० १०।४७।६६ ) इत्यादौ वृत्तिपदस्य जन्यज्ञानपरत्वान्न मनःपरिणामरूपवृत्तिकल्पनम्, मनसा आत्मनि ज्ञानस्यैव जननात् इति कल्पनागौरवमिति ।

एवं च श्लोकद्वयव्याख्यायां सदेव नित्यमेव ज्ञानमेकम्, एवकारेण "नित्यान्यज्ज्ञानमनेकम्" इत्यस्य लाभः । अत्र तात्पर्यवशात् एवकारादिकं पूरितम्, विविधं नानाविधज्ञानवृत्त्येकधर्मवद् जन्यज्ञानानां नित्यैकज्ञानस्य च सविषयकत्वसाम्यात् 'जानामि' इत्यनुव्यवसायाच्च तेषु ज्ञानत्वमेकं सिद्धमिति भावः । वृत्तय

विना, विकारहेतोरुपाधेरभावादित्यर्थः। नन्वहङ्कारपर्य्यन्तस्य सर्वस्य लये शून्यमेवाऽवशिष्यते, क्व तदा कूटस्थ आत्मा, अत आह—

वैद्याभूषणी।

भर्शो भवतीति प्रतिपादयितुमाह—नन्वित्यादि। शून्यमेवेति। अहंप्रत्ययं

राधामोहनी।

एवेति। इन्द्रियवृत्तिसापेक्षाण्येव ज्ञानानीत्यर्थः। न निरुक्तं ज्ञानं कथमित्यादि संस्कारवानहङ्कार इत्यन्तं पूर्वपक्षः। यद्वा, कथमिति—कथं निर्विकारत्वम्? हर्ष-शोकादिविकारदर्शनादित्यर्थः। शङ्कां भावार्थद्वारा निवर्तयन्नाह—तदैवेति। वि-कारहेतोरुपाधेरभावादिति। विकाराश्रयस्योपाधेरभावादित्यर्थः। यथाश्रुतासङ्ग-तेः। जाग्रत्स्वप्नदशायां विकारहेतुसत्त्वप्रतीतेर्विकार एव प्रतीयते, न तु सविकार इवेति। तथा च जाग्रत्स्वप्नदशायामुपाधिविकार आत्मनि प्रतीयते इति भावः।

अयं यथाश्रुतोऽर्थो मायावादमत एव सङ्गच्छते। स्वमते तु 'आत्मा कथं निर्वि-कारः, लिङ्गशरीरस्य स्वाभाविकत्वेन लिङ्गशरीररूपत्वात्? इत्यत आह—सन्ने इत्यादि। आशयमृते कूटस्थः कालव्यापी आत्मा वर्तते इत्यर्थः। तथा च लि-ङ्गशरीरं नात्मनः स्वाभाविकम्, सुषुप्तौ व्यभिचारादिति भावः। ननु तदानीमात्म-सत्त्वे किं मानम्? इत्यत आह—तदनुस्मृतिर्न इति। अस्यार्थो विवृत एवेति, अथ ज्ञानं जीवस्यैकं नित्यम्, विकाराभिमानात्मनो जन्यं ज्ञानं मन्यते, किन्तु म-नःपरिणामवृत्तिविशेषस्य परम्परासम्बन्धेन नित्यज्ञानविशेषणतया तद्विशिष्टस्य घटादिभासकत्वम्। एवं कृतीच्छाद्वेषदुःखसंस्कारा अपि मनोविकारविशेषाः स्व-रूपसम्बन्धेनात्मनि वर्तन्ते। ज्ञानमिव सुखमप्यात्मनो नित्यधर्मः, ब्रह्मांशत्वात्; "स्वसुखनिभृतचेताः" इत्यादिवचनाच्च। तच्च सुखं ब्रह्मानुभवादेव प्रकाशते। अन्यदा त्वात्मनो मायामलिनतया न तत्प्रकाशः। अत एव तत्सुखानुभवरूप-

तदनुस्मृतिर्नः—तस्याखण्डात्मनः सुषुप्तिसाक्षिणः स्मृतिर्नोऽस्माकं जाग्रद्द्रष्टॄणां जायते—'एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति। अतोऽननुभूतस्य तस्याऽस्मरणादस्त्येव सुषुप्तौ तादृगात्मानुभवः, विषयसम्बन्धाभावाच्च न स्पष्ट इति भावः। अतः स्वप्रकाशमात्रवस्तुनः सूर्य्यादेः प्रकाशवदुपलब्धिमात्रस्याऽ-

वैद्याभूषणी ।

विनात्मनोऽप्रतीतेरिति भावः। अखण्डात्मन इति। अणुरूपत्वाद्विभागानर्हस्येत्यर्थः। ननु स्वापादुत्थितस्याऽऽत्मनोऽहङ्कारेण योगात् सुखमहमस्वाप्समिति विमर्शो जागरे सिध्यति, सुषुप्तौ तु चिन्मात्रः स इति चेत्, तत्राह—अतोऽननुभूतस्येति। अनुभवस्मरणयोः सामानाधिकरण्यादित्यर्थः। तस्मात्तस्यामपि अनुभवितैवात्मेति सिद्धम्। ननूपलब्धिमात्रमित्युक्तं तस्योपलब्धृत्वं कथम्? तत्राह—अत इत्यादि। यद् वै इति। त-

राधामोहनी ।

मुक्तिमपेक्ष्य भगवत्सेवासुखस्याधिक्यम्। संसारितादशायां च मनोवृत्तिविशेषसहकारेण तत्सुखांशाविर्भावस्वीकारात् इति चेत्, 'जानामि' इत्याद्यनुभवेन ज्ञानविशेषानवगाहनात् निरुक्तयुक्त्यैवोपपत्तौ किं निरुक्तनानाविधकल्पनेनेति। जीवात्मनि नित्यसुखाङ्गीकारेऽपि ज्ञानवज्जन्यसुखस्यापि स्वीकारात्। एवं भगवच्छरीरस्य तदिन्द्रियादीनां च नित्यतया निर्विकारतया "वीक्ष्य रन्तुं मनश्चक्रे" ( भा० १०।२९।१ ) इत्यादिषु भगवतो जन्यज्ञानस्यापि श्रवणात्। तत्र कुत्र तज्जनीयम्? तस्य तन्मनसश्च निर्विकारत्वादिति निरुक्तक्रमेण जन्यज्ञानादिस्वीकारेऽपि विकारित्वाभाव इति।

प्यात्मन उपलब्धिः स्वाश्रयेऽस्त्येवेत्यायातम् । तथा च श्रुतिः—

"यद्वै तन्न पश्यति पश्यन् वै द्रष्टव्यान्न पश्यति, नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" ( बृ० ४।३।२३ ) इति । अयं साक्षिसाक्ष्यविभागेन तृतीयस्तर्कः । दुःखिप्रेमास्पदत्वविभागेन चतुर्थोऽपि तर्कोऽवगन्तव्यः ॥

तदुक्तम्—

"अन्वयव्यतिरेकाख्यस्तर्कः स्याच्चतुरात्मकः ।
आगमापायितदवधिभेदेन प्रथमो मतः ॥

---

वैद्याभूषणी ।

दात्मचैतन्यं कर्तृ सुषुप्तौ न पश्यतीति यदुच्यते, तत् खलु द्रष्टव्यविषयाभावादेव, न तु द्रष्टृत्वाभावादित्यर्थः स्फुटमन्यत् ॥

पद्ययोर्व्याख्याने चत्वारस्तर्का योजितास्तानभियुक्तोक्ताभ्यां सार्द्धकारिकाभ्यां निर्दिशति,—अन्वयेति । तर्कशब्देन तर्काङ्गकमनुमानं बो-

राधामोहनी ।

अत्रेदं बोध्यम्—ब्रह्मणो ज्ञानसुखमहत्त्वैकत्वानि चत्वारि स्वरूपभूतगुणाः, संयोगविभागौ तटस्थौ सवमतसिद्धौ, इच्छाकृत्योः कार्यानुकूलयोस्तटस्थत्वमद्वैतवादिनः प्राहुः । द्वैतवादिनां मते तयोरपि स्वरूपसद्गुणः, "स्वाभाविका ज्ञानबलक्रिया च" इति श्रुतेः । तत्र बलम्—इच्छा, तस्या अप्रतिहतत्वेन बलत्वोपचाराद् । क्रिया—कृतिः, कृधातुनिष्पन्नत्वात्, "गुणैः स्वरूपभूतैस्तु गुण्यसौ हरीश्वरः" इति माध्वभाष्यधृतवचनाच्च । अन्ये च गुणा भगवत्तत्त्वनिरूपणे विवरणीया इति । जीवात्मनस्तु नित्यसुखे मानाभावः, सुषुप्तौ मुक्तौ च ब्रह्मसुखानु-

द्रष्टृदृश्यविभागेन द्वितीयोऽपि मतस्तथा ।
साक्षिसाक्ष्यविभागेन तृतीयः सम्मतः सताम् ॥
दुःखिप्रेमास्पदत्वेन चतुर्थः सुखबोधकः ॥" ११।३ ॥ इति श्रीपिप्पलायनो निमिम् ॥

एवम्भूतानां जीवानां चिन्मात्रं यत् स्वरूपम्, तयैवाकृत्या तदंशित्वेन च तदभिन्नं यत् तत्त्वम्, तदत्र वाच्यमिति व्यष्टिनि-

वैद्याभूषणो ।

ध्यम् । आगमापायिनो दृश्यात् साक्षाद् दुःखास्पदाच्च देहादेरात्मा भिद्यते; तदवधित्वात्, तद्द्रष्टृत्वात्, तत्साक्षित्वात्, प्रेमास्पदत्वाच्चेति क्रमेण हेतवो नेयाः । व्यतिरेकश्चोह्यः ॥

ईश्वरज्ञानार्थं जीवस्वरूपज्ञानं निर्णीतम् । अथ तत्साहश्येनेश्वरस्वरूपं निर्णेतुं पूर्वोक्तं योजयति—एवम्भूतानामित्यादिना । चिन्मात्रं

राधामोहनी ।

भवस्य श्रुतत्वात्, "ब्रह्म वेद ब्रह्मैव भवति" (मु० ३।२।९ ) इति श्रुत्यां तु तथैव तात्पर्यावगमात्,

"सिद्धा ब्रह्मसुखे मग्ना दैत्याश्च हरिणा हताः" ।

इति रसामृतसिन्धुवचनाच्च ।

"स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावः" ।

इत्यादौ यत् "स्वसुख" इत्युक्तम्, तत्तस्य मुक्तस्य शुकस्य ब्रह्मध्यानावस्थितस्य ब्रह्मसुखे स्वीयत्वोपचारादिति ।

देशद्वारा प्रोक्तम्। तदेव ह्याश्रयसंज्ञकम्, महापुराणलक्षणरूपैः सर्गादिभिरर्थैः समष्टिनिर्देशद्वारापि लक्ष्यते इत्यत्राह—द्वाभ्याम्।

"अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः॥
दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्।
वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा॥" (भा०२।१०।१२)

मन्वन्तराणि चेशानुकथाश्च मन्वन्तरेशानुकथाः। अत्र सर्गादयो दशार्था लक्ष्यन्ते इत्यर्थः। तत्र च दशमस्य विशुद्ध्यर्थम्—तत्त्वज्ञानार्थम्, नवानां लक्षणम्—स्वरूपं वर्णयन्ति।

वैद्याभूषणी।

यत् स्वरूपमिति। चेतयितृ चेति बोध्यम्, पूर्वनिरूपणात्। तयैवाकृत्येति। चिन्मात्रत्वे सति चेतयितृत्वं याऽऽकृतिर्जातिस्तयेत्यर्थः। "आकृतिस्तु स्त्रियां रूपे सामान्यवपुरुषोरपि" इति मेदिनी। तदंशित्वेन जीवांशित्वेन चेत्यर्थः। तदभिन्नं जीवाभिन्नं यद् ब्रह्मतत्त्वम्। अंशः खलु अंशिनो न भिद्यते, पुरुषादिव दण्डिनो दण्डः। व्यष्टीति। समुदायः समष्टिस्तदेकदेशस्तु व्यष्टिरित्यर्थः। जीवादिशक्तिमद् ब्रह्म समष्टिः, जीवस्तु व्यष्टिः। तादृशजीवनिरूपणद्वारा शास्त्रस्य ब्रह्मस-

राधामोहनी।

आकृत्या—चेतनरूपया, तदभिन्नम्—तदभिन्नत्वेन प्रतीतम्, तत्त्वम्—सर्वकारणत्वेन सर्वाधारत्वेन च मुख्यं वस्तु। व्यष्टिनिर्देशद्वारा—व्यष्टिनिर्देशतात्पर्य-

नन्वत्र नैवं प्रतीयतेऽत आह—श्रुतेन—श्रुत्या कण्ठोक्त्यैव स्तुत्यादिस्थानेषु अञ्जसा साक्षाद्वर्णयन्ति, अर्थेन—तात्पर्य्यवृत्त्या च तत्तदाख्यानेषु ॥

तदेवं *दशमं विस्पष्टयितुं तेषां दशानां व्युत्पादिकां सप्त-श्लोकीमाह—

"भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः ।
ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ॥" (भा० २।१।३)

भूतानि—खादीनि, मात्राणि च—शब्दादीनि, इन्द्रियाणि च। धीशब्देन महदहङ्कारौ । गुणानां वैषम्यात्—परिणामात् । ब्रह्मणः परमेश्वरात् कर्तुर्भूतादीनां जन्म—सर्गः । पुरुषो वैराजो ब्रह्मा, तत्कृतः—पौरुषः । चराचरसर्गो विसर्ग इत्यर्थः ।

वैद्याभूषणी ।

म्बन्धित्वमुक्तम् । अथ जीवादिशक्तिविशिष्टसमष्टिब्रह्मनिरूपणेन तस्य तथात्वं वक्तव्यमित्यर्थः । दशमस्य चेश्वरस्य । अवशिष्टः स्फुटार्थः ॥

सर्गादीन् दश व्युत्पादयति—तदेवमित्यादिना । ब्रह्मणः परमेश्वरा-

राधामोहनी ।

वृत्त्या । समष्टिजीवः—वैराजस्तन्निर्देशद्वारा । मन्वन्तरेशानुकथेति लक्षणद्वयम्, अन्यथा दशसङ्ख्यापूर्त्यनुपपत्तेः ॥

दशानाम्—सर्गादिपदार्थानाम्, व्युत्पादिकाम्—विशेषार्थपरताबोधिकाम् ।

* 'तमेव' इति पाठान्तरम् ।

"स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः ।
मन्वन्तराणि सद्धर्म्म ऊतयः कर्म्मवासनाः ॥
अवतारानुचरितं हरेश्चास्याऽनुवर्त्तिनाम् ।
पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः ॥"

(भा० २।१०।४,५)

वैकुण्ठस्य भगवतो विजयः—सृष्टानां तत्तन्मर्य्यादा-पालनेनोत्कर्षः, स्थितिः—स्थानम् । ततः स्थितेषु स्वभक्तेषु तस्याऽनुग्रहः—पोषणम् । मन्वन्तराणि तत्तन्मन्वन्तरस्थितानां मन्वादीनां तदनुगृहीतानां सतां चरितानि, तान्येव धर्म्मस्तदु-पासनाख्यः सद्धर्म्मः । तत्रैव स्थितौ नानाकर्म्मवासना ऊतयः । स्थितावेव हरेरवतारानुचरितम्, अस्यानुवर्त्तिनाञ्च कथाः, ईशानुकथाः प्रोक्ता इत्यर्थः ।

"निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः ।
मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः ॥"(भा०२।१०।६)

---

वैद्याभूषणी ।

दिति । कारणसृष्टिः पारमेश्वरी, कार्य्यसृष्टिस्तु वैरिञ्चीत्यर्थः । मुक्तिरिति । भगवद्वैमुख्यानुगतयाऽविद्यया रचितमन्यथारूपं देवमानवादि-

राधामोहनी ।

गुणानाम्—प्रकृतिगुणानाम्, सत्त्वरजस्तमसाम्, भूतादीनां जन्म—हिरण्यगर्भवैराजयोः सूक्ष्मस्थूलशरीराज्जन्मेति यावत् । स्थानशब्दं विवृणोति—स्थितिरिति ।

स्थित्यनन्तरञ्चाऽऽत्मनो जीवस्य शक्तिभिः स्वोपाधिभिः सहाऽस्य हरेरनुशयनम्, हरिशयनानुगतत्वेन शयनं निरोध इत्यर्थः। तत्र हरेः शयनम्—प्रपञ्चं प्रति दृष्टिनिमीलनम्, जीवानां शयनम्—तत्र लय इति ज्ञेयम्। तत्रैव निरोधेऽन्यथारूपमविद्याध्यस्तमज्ञत्वादिकं हित्वा स्वरूपेण व्यवस्थितिर्मुक्तिः ॥

"आभासश्च निरोधश्च यतोऽस्त्यध्यवसीयते ।
स आश्रयः परं ब्रह्म परमात्मेति शब्दते ॥" (भा०२।१०।७)

आभासः—सृष्टिः, निरोधः—लयश्च यतो भवति, अध्यवसीयते—उपलभ्यते, जीवानां ज्ञानेन्द्रियेषु प्रकाशते च, स ब्रह्मेति परमात्मेति प्रसिद्ध आश्रयः कथ्यते। इति शब्दः प्रकारार्थः,

---

वैद्याभूषणी ।

भावं हित्वा, तत्साम्मुख्यानुप्रवृत्तया तद्भक्त्या विनाश्य, स्वरूपेणापहतपाप्मत्वादिगुणाष्टकविशिष्टेन जीवस्वरूपेण जीवस्य व्यवस्थितिर्विशिष्टा पुनरावृत्तिशून्या भगवत्सन्निधौ स्थितिर्मुक्तिरित्यर्थः ॥

अथ नवभिः सर्गादिभिर्लक्षणीयमाश्रयतत्त्वमाह—आभासश्चेति ।

राधामोहनी ।

तदनुग्रह इत्यस्यादौ पूरयति—तत्र स्थितेषु भक्तेष्विति । अस्य—जीवस्य । अनुगतत्वेन—पश्चाद्भावित्वेऽतिशयेन, नियतत्वेन वा । दृष्टिनिमिलनम्—दृष्टिविषये ईक्षणाभावः । लयः—ऐक्यम् । तत्रैव निरोध इति । निरोधान्तर्गतमित्यर्थः । सप्तम्या अन्तर्गतत्वस्य विवक्षणादिति ॥

अस्तीत्यर्थः—भवतीति । भवतीति—पूर्णं वा । अस्तीत्यस्य तिष्ठतीत्यर्थः ।

तेन भगवानिति च अस्य विवृतिरग्रे विधेया ॥

स्थितौ च तत्राश्रयस्वरूपमपरोक्षानुभवेन व्यष्टिद्वाराऽपि स्पष्टं दर्शयितुमध्यात्मादिविभागमाह—

"योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः ।
यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः ॥
एकमेकतराभावे यदा नोपलभामहे ।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥"

( भा० २।१०।८,९ )

योऽयमाध्यात्मिकः पुरुषश्चक्षुरादिकरणाभिमानी द्रष्टा जीवः, स एवाधिदैविकश्चक्षुराद्यधिष्ठाता सूर्य्यादिः । देहसृष्टेः पूर्व्वं

---

वैद्याभूषणी ।

यत इति हेतौ पञ्चमी ॥

ननु करणाभिमानिनो जीवस्य करणप्रवर्त्तकसूर्य्यादित्वमत्र कथम् ? तत्राह—देहसृष्टेः पूर्व्वमिति । करणानामिति । अधिष्ठानाभावेन—चक्षुर्गोलकाद्यभावेनेत्यर्थः । उभयोरपि तयोर्वृत्तिभेदानुदयेनेति । करणानां वि-

राधामोहनी ।

यतः स्थितिरिति पर्यवसितम् । अध्यवसीयते इत्यत्रापि यत इत्यस्याऽन्वयः । तथा च ज्ञानेन्द्रियप्रवर्तक इति ॥

द्रष्टा—प्रकाशकः । अक्षमतयेत्यस्य सहायतायां हेतुताकरणप्रकाशकर्तृत्वाभिमानीति—करणविषयदर्शनकर्तृत्वयोरभिमानीत्यर्थः । तत्सहायपदेन करणप्रकाशकतृत्वाभिमानिजीवसहायसूर्यादिलाभः । वृत्तिभेदानुदयेनेति । देवतासृष्टेः पूर्व-

करणानामधिष्ठानाभावेनाऽक्षमतया करणप्रकाशकर्त्तृत्वाभिमानितत्सहाययोरुभयोरपि तयोर्वृत्तिभेदानुदयेन जीवत्वमात्राविशेषात् । ततश्चोभयः करणाभिमानितदधिष्ठातृदेवतारूपो द्विरूपो विच्छेदो यस्मात्, स आधिभौतिकश्चक्षुर्गोलकाद्युपलक्षितो दृश्यो देहः पुरुष इति पुरुषस्य जीवस्योपाधिः । "स वा एव पुरुषोऽन्नरसमयः" ( तै० २।१।१ ) इत्यादिश्रुतेः ॥

'एकमेकतराभावः' इत्येषामन्योन्यसापेक्षसिद्धत्वे नानाश्रयत्वं दर्शयति—तथा हि दृश्यं विना तत्प्रतीत्यनुमेयं करणं न सिध्यति, नाऽपि द्रष्टा, न च तद्विना करणप्रवृत्त्यनुमेयस्तदधिष्ठाता

---

वैद्याभूषणी ।

षयग्रहणं वृत्तिः, देवतानान्तु तत्र प्रवर्त्तकत्वं वृत्तिः । अयमत्र निष्कर्षः—देहोत्पत्तेः पूर्वमपि जीवेन सार्द्धमिन्द्रियाणि तद्देवताश्च सन्त्येव, तदा तेषां तेषाञ्च वृत्त्यभावाज्जीवेऽन्तर्भावो विवक्षितः । उत्पन्ने तु देहे तयोर्विभागो यद्भवतीत्याह—ततश्चोभय इति ॥

आध्यात्मिकादीनां त्रयाणां मिथः सापेक्षत्वेन सिद्धिस्तेषामाश्रयत्वं

राधामोहनी ।

मित्यनेनावृत्त्याऽन्वयः । वृत्तिभेदः—विषयगतचक्षुरादिपरिणामविशेषः । जीवत्वमात्राविशेषादिति । "उभयोरपि तयोः" इत्यनेनाऽस्यान्वयः । इदं च 'स एवाधिदैविकः' इत्यत्र हेतुः 'जीवत्वमात्राविशेषात्' इत्यस्य उपाधिवैशिष्ट्यरूपजीवत्वांशेऽविशेषादित्यर्थः । तथा च 'स एव' इत्यस्य जीवत्वेन तत्तुल्य इत्यर्थः । तत्पदस्य तत्तुल्यार्थकत्वे तात्पर्यग्राहक एवशब्दः, 'स एवायं गकारः' इत्यादौ

सूर्य्यादिः, न च तं विना करणं प्रवर्त्तते, न च तद्विना दृश्यमित्येकतरस्याभावे एकं नोपलभामहे। तत्र—तदा, तत् त्रितयमालोचनात्मकेन प्रत्ययेन यो वेद—साक्षितया पश्यति, स परमात्मा आश्रयः। तेषामपि परस्परमाश्रयत्वमस्तीति तद्व्यवच्छेदार्थं विशेषणम्—स्वाश्रयोऽनन्याश्रयः, स चासावन्येषामाश्रयश्चेति।

---

वैद्याभूषणी।

नास्तीति व्याचष्टे—एकमेकतरेत्यादिना। त्रितयम्—आध्यात्मिकादित्रयम्। ननु शुद्धस्य जीवस्य देहेन्द्रियादिसाक्षित्वाभिधानेनान्यानपेक्षत्वसि-

राधामोहनी।

तथा दर्शनात्। तत्र सूर्यादेः करणक्रियाजननद्वारा करणाभिमानिनश्च तद्दर्शनप्रवृत्तिद्वारा करणवृत्तिभेदजनकत्वेन तयोरुपयोग इति दर्शितम्॥

अन्यसापेक्षसिद्धत्वेन—अन्यसापेक्ष्यानुपपत्तिमूलकसिद्धित्वेन, अनात्मत्वम् स्वप्रकाशचैतन्यैकरूपात्मभिन्नत्वम्। नापि द्रष्टा नापि तदभिमानी साक्षी चेत्यर्थः। दृश्यं देहादि घटादि च। नोपालभामहे इति। स्वतः प्रकाशो नास्तीति सूचितम्। आलोचनात्मकेन—अपरोक्षानुभवेन। साक्षितया—उपाध्युपलक्षिततया, न तु विशिष्टतया, पश्यतीति दर्शनक्रियायां प्रत्ययेनेति तृतीयार्थाभेदान्वयो बोध्यः। स परमात्मेति मूलस्थात्मपदस्य परमात्मपरतया वर्णनं जीवपरमयोरभेदलाभायेति।

अत्रायं भावः—उपाधेः स्थूलसूक्ष्मदेहस्य जड़तया विषयानवभासकतया तद्विशिष्टस्यापि न तद्भासकत्वम्, विशेषेण तद्बाधादिति। उपाध्युपलक्षिचैतन्यमात्रस्य प्रकाशकत्वम् आलोचनात्मकज्ञानमेव, अभेदेऽपि यो वेदेति वेदनक्रियाश्रयत्वरूपकर्तृत्वांशांशिभावोपगमेन बोध्यम्। तथा च 'अयं घटः' इति ज्ञानं स्वप्रकाशतया

तत्रांशांशिनोः शुद्धजीवपरमात्मनोरभेदांशस्वीकारेणैवाश्रय उक्तः। ततः परोऽपि मनुतेऽनर्थमिति ।

"जाग्रत्स्वप्नसुषुप्तञ्च गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन विवक्षितः ॥"
(भा० ११।१३।२६ ) इति,

"शुद्धो विचष्टे ह्यविशुद्धकर्त्तुः" इत्याद्युक्तस्य साक्षिसंज्ञिनः

---

वैद्याभूषणो ।

द्धेस्तस्याश्रयत्वं कुतो न ब्रूषे ? तत्राह—अत्रांशांशिनोरिति । अंशिनांशो-

राधामोहनी ।

'घटमहं जानामि' इत्याकारकमपि विषयघटादिकमवभासयत् शरीरमात्मांशे स्थूलसूक्ष्मदेहाभेदघटाद्याकारमनोवृत्तिविशिष्टचैतन्यस्वरूपं चाऽवगाहमानमपरोक्षं परमात्मबोधकमिति भावः । तत्र दृश्यवस्तुभाने इन्द्रियमनोवृत्त्यपेक्षावृत्तिभानेन वृत्त्यन्तरापेक्षानवस्थाभयात् । ननु चैतन्यस्य वृत्त्यपेक्षणे कथं स्वप्रकाशकता ? इति चेत्, नहि विषयभासकत्वे वृत्त्यपेक्षा, किन्तु विषयावरकतमोऽभिभवार्थमित्युपगमात्, विषयावरकतमसोऽस्वीकारे चतन्यस्य निरपेक्षतया सर्वदा विषयभानप्रसङ्गादिति पर्यवसितम् । ननु तथाप्यद्वैतवादमते व्यष्ट्युपहितचैतन्यस्य परमात्मत्वसम्भवे स्वमते व्यष्ट्यात्मनो भिन्नत्वात् कथं परमात्मत्वम् ? इत्यत आह—तत्रांशांशिनोरिति । अभेदांशस्वीकारेणेति तुल्यताभिप्रायेणेत्यर्थः । तथा च यो वेद स आत्मा स्वाश्रयाश्रय इत्यन्वयेनापरोक्षविषयीभूतात्मनाऽनन्याश्रय सर्वाश्रयस्य परमात्मनः तुल्यतात्मकैक्येन तादृशपरमात्मनो बोध इति भावः। अत : परमात्माभेदविवक्षयाऽत्र जीवात्मन आश्रयत्वकथनात्। आसाम्—जाग्रदादिवृत्तीनाम्,

शुद्धजीवस्याऽऽश्रयत्वं न शङ्कनीयम्। अथवा, नन्वाध्यात्मिकादीनामप्याश्रयत्वमस्त्येव ? सत्यम्, तथापि परस्पराश्रयत्वान्न तत्राश्रयताकैवल्यमिति ते त्वाश्रयशब्देन मुख्यतया नोच्यन्ते इत्याह—एकमिति। तर्हि साक्षिण एवाऽऽस्तामाश्रयत्वम्, तत्राह—त्रितयमिति। स आत्मा साक्षी जीवस्तु, यः स्वाश्रयाऽनन्याश्रयः परमात्मा, स एवाश्रयो यस्य तथाभूत इति। वक्ष्यते च

---

वैद्याभूषणी।

ऽपीह गृहीत इत्यर्थः। असन्तोषाद् व्याख्यान्तरम्—अथवेति। तर्हि इति। साक्षिणः—शुद्धजीवस्य। सर्वमिति। पुमान् जीवः॥

राधामोहनी।

साक्षित्वेन—साक्षाद् दर्शित्वेन, विलक्षणः—शुद्धचैतन्यैकरूपः। न शङ्कनीयमिति। तत्र परमात्मतात्पर्यबोधकपदाभावेन शुद्धजीवमात्रपरत्वादिति भावः। ननु परमात्माभेदविवक्षयाऽपि शुद्धस्याश्रयत्वं न घटते इत्यत आह—अथवेति। एकमिति। तथा चैतेषां निराश्रयत्वाभावात् न मुख्याश्रयत्वमिति भावः। 'स आत्मा' इति तस्य मुख्याश्रयत्वाभावे हेतुभूतविशेषणमाह—स्वाश्रयाश्रय इति। तथा च तस्याश्रयः परमात्मा, स एव निराश्रय आश्रयपदेनाऽत्र विवक्षितः, न तु तदाश्रितो जीव इति भावः। परमात्मनस्तथात्वम्, न जीवस्य इति दर्शयितुमाह—वक्ष्यते चेति। अन्ये तु एकमिति एकतया भाने एकं निरुक्तत्रयाणां तदन्यमपरं नेत्युपलभामहे—अनुमानेन जानीम इति जीवानां न साक्षाद्दर्शित्वम्। न च जीवानां स्वात्मसाक्षात्कारोऽस्तीति वाच्यम्, तत्साक्षात्कारस्य देहाभेदेनैव, नतु स्वरूपेणेति। स्वरूपग्रहस्य च जीवस्य संसारितादशायाम्, अनुमानाधीनत्वादिति। साक्षात्तत्त्रितयदर्शी सर्वज्ञः परमात्मैवाश्रयणीय इत्याह—त्रितयं तत्र यो

हंसगुह्यस्तवे—

"सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे" (भा० ३।४।२५) इति । तस्मात् "आभासश्च" इत्यादिनोक्तः परमात्मैवाश्रय इति । २।१० श्रीशुकः ॥

अस्य श्रीभागवतस्य महापुराणत्वव्यञ्जकलक्षणं प्रकारान्तरेण च वदन्नपि तस्यैवाश्रयत्वमाह द्वयेन—

---

वैद्याभूषणी ।

अस्येति । प्रकारान्तरेणेति । क्वचिन्नामान्तरत्वादर्थान्तरत्वाच्चेत्यर्थः । एतानि दश लक्षणानि केचित् तृतीयादिषु क्रमेण स्थूलधियो

राधामोहनी ।

वेदेति । यच्चोक्तं देहवैशिष्ट्योपहितवैलक्षण्यं जीवस्य, तन्न अद्वैतवादिनां मतम्, देहसम्बन्धमात्रस्यैव जीवानां संसारिताप्रयोजकता, न तु तद्वैशिष्ट्यस्यापीति । अद्वैतवादिनामेव देहवैशिष्ट्यस्य ब्रह्मांशपरिच्छेदेन ब्रह्मणोंऽशेन च जीवत्वव्यवस्थापकत्वात्, एवं जीवात्मनोऽणुतया युगपत् प्राणेन्द्रियादिसमुदायात्मकलिङ्गशरीरवैशिष्ट्यासम्भवः सम्बन्धस्तु साक्षात्परम्परासाधारणं सम्भवतीति न तेन संसारिता । एवं जीवात्मनो देहविशिष्टस्य स्थूलसूक्ष्मदेहाद्यभिमानतत्कृतानर्थौ देहाद्युपहितस्य तस्यैव तदभाव इति मायामोहितत्वतदभावयोरेकत्र स्वीकारे पर्यवसिते कथं परात्मजीवयोर्भेदस्वीकारः ? उपलक्षितस्य शुद्धजीवस्य गृहगृहान्तर्वर्तिघटाकाशयोरभेदवत् मायोपहितचैतन्यात्मकादीश्वरादभिन्नतया मायाश्रयत्वाविरोधात् ॥

तस्यैवेति ब्रह्मण एवेत्यर्थः, तद्विदः—पुराणविदः । महापुराणाल्पपुराणभिन्नाधिकरणत्वेनेति । महापुराणाल्पपुराणयोर्भेदेन भिन्नमधिकरणं ययोस्तत्त्वेन

"सर्गोऽस्याऽथ विसर्गश्च वृत्तिरक्षान्तराणि च ।
वंशो वंशानुचरितं संस्था हेतुरपाश्रयः ॥
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ।
केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ॥"

( भा० १२।७।९, १० )

अन्तराणि—मन्वन्तराणि । पञ्चविधम्—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंश्यानुचरितञ्चेति पुराणं पञ्चलक्षणम् ॥"

इति केचिद् वदन्ति । स च मतभेदो महदल्पव्यवस्थया महापुराणमल्पपुराणमिति भिन्नाधिकरणत्वेन । यद्यपि विष्णुपुराणादावपि दशापि तानि लक्ष्यन्ते, तथापि पञ्चानामेव प्राधान्येनोक्तत्वाद्-अल्पत्वम् । अत्र दशानामर्थानां स्कन्धेषु यथाक्रमं प्रवेशो न विवक्षितः, तेषां द्वादशसंख्यत्वात् ; द्वितीयस्कन्धोक्तानां तेषां तृतीयादिषु यथासंख्यं न समावेशः; निरोधादीनां दशमादिषु

---

वैद्याभूषणी ।

योजयन्ति, तान्निराकुर्वन्नाह—द्वितीयस्कन्धोक्तानामिति । अष्टादशसहस्रित्वं द्वादशस्कन्धित्वञ्च भागवतलक्षणं व्याकुप्येत, अध्यायपूर्त्तौ भागवतत्वो-

राधामोहनी ।

दशलक्षणपञ्चलक्षणेति लक्षणद्वयमित्यर्थः । तेषां स्कन्धानाम् । ननु द्वितीयस्कन्धशेषे लक्षणान्युक्तानि, ततः क्रमेण तृतीयादिषु किमुक्तानि ? इत्याशङ्क्याह—

अष्टमवर्ज्जम्, अन्येषामप्यन्येषु यथोक्तलक्षणतया समावेशनाशक्यत्वादेव । तदुक्तं श्रीस्वामिभिरेव —

"दशमे कृष्णसंकीर्त्तिर्वितानायोपवर्ण्यते ।

धर्म्मग्लानिनिमित्तस्तु निरोधो दुष्टभूभुजाम् ॥" इति ।

प्राकृतादिचतुर्द्धा यो निरोधः स तु वर्णित इति । अतोऽत्र स्कन्धे श्रीकृष्णरूपस्याश्रयस्यैव वर्णनप्राधान्यं तैर्विवक्षितम् । उक्तञ्च स्वयमेव—

दशमे दशमं लक्ष्यमाश्रिताश्रयविग्रहम् ॥" इति ।

एवमन्यत्राप्युन्नेयम् । अतः प्रायशः सर्वेऽर्थाः सर्वेष्वेव स्कन्धेषु गुणत्वेन वा मुख्यत्वेन वा निरूप्यन्ते इत्येव तेषामभि-

---

वैद्याभूषणा ।

क्तिश्च न सम्भवेदिति बोध्यम् । शुकभाषितञ्चेद् भागवतम्, तर्हि प्रथमस्य द्वादशशेषस्य च तत्त्वानापत्तिः । तस्मादष्टादशसहस्रि तत्पितुराचा-

राधामोहनी ।

द्वितीयस्कन्धोक्तानामपि । तेषामिति तेषाम्—दशलक्षणानाम् । तेषामपि मतम्—श्रीधरस्वामिनामपि मतम् । प्रायशः स्यादिति । तृतीयादिषु क्रमेणैव दशलक्षणवर्णनेनेति द्वितीयतृतीययोस्तल्लक्षणाक्रान्तपुराणता न स्यादिति भावः । तस्मात् क्रमवर्णनस्यासम्भवात् क्रमो न विवक्षित इति । तथा चाश्रयस्य परब्रह्मणः कृष्णस्य मुख्यत्वेनःवर्णनीयतया उपक्रमे तस्यैवादौ वर्णनमुपक्रान्तम्, मध्ये मध्ये अन्ते च तस्यैव वर्णनं कृतम्, तत्प्रसङ्गात् तदाधिक्यतात्पर्याद्वा यथायोगमितराणि लक्षणानि वर्णितानीति भावः । तथोक्तम्—

मतम्। "श्रुतेनार्थेन चाञ्जसा" इत्यत्र च तथैव प्रतिपन्नम्, सर्वत्र तत्तत्सम्भवात्। ततश्च प्रथमद्वितीययोरपि महापुराणतायां प्रवेशः स्यात्। तस्मात् क्रमो न गृहीतः ॥

अथ सर्गादीनां लक्षणमाह—

"अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः।
भूतमात्रेन्द्रियार्थानां सम्भवः सर्ग उच्यते ॥"
( भा० १२।७।११ )

प्रधानगुणक्षोभाद् महान्, तस्मात् त्रिगुणोऽहङ्कारः, तस्माद्-भूतमात्राणां भूतसूक्ष्माणाम् इन्द्रियाणाञ्च, स्थूलभूतानाञ्च, तदुपलक्षिततद्देवतानाञ्च सम्भवः सर्गः, कारणसृष्टिः सर्ग इत्यर्थः।

---

वैधाभूषणी।

र्यांच्छुकेनाधीतं कथितञ्चेति साम्प्रतम्, संवादास्तु तथैवानादिसिद्धा निबद्धा इति साम्प्रतम् ॥

उद्दिष्टानां सर्गादीनां क्रमेण लक्षणानि दर्शयितुमाह—अथेत्यादि। अव्याकृतेति। त्रिवृत्पदं महतोऽपि विशेषणं बोध्यम्, "सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्" इति श्रीवैष्णवात्।

राधामोहनी।

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥"

इति क्रमेण श्रीकृष्णपरमिदं शास्त्रमिति भावः ॥

अव्याकृतशब्दः प्रधानपर इत्यभिप्रायेण व्याचष्टे—प्रधानगुणक्षोभादिति।

"पुरुषानुगृहीतानामेतेषां वासनामयः ।
विसर्गोऽयं समाहारो बीजाद् बीजं चराचरम् ॥"
( भा० १२।७।१२ )

पुरुषः परमात्मा । एतेषां महदादीनाम्, जीवस्य पूर्वकर्म्म-वासनाप्रधानोऽयं समाहारः कार्य्यभूतश्चराचरप्राणिरूपो बीजाद् बीजमिव प्रवाहापन्नो विसर्ग उच्यते, व्यष्टिसृष्टिर्विसर्ग इत्यर्थः । अनेनोतिरप्युक्ता ।

"वृत्तिर्भूतानि भूतानां चराणामचराणि च ।
कृता स्वेन नृणां तत्र कामाच्चोदनयाऽपि वा ॥"
( भा० १२।७।१३ )

चराणां भूतानां सामान्यतोऽचराणि चकाराच्चराणि च कामाद् वृत्तिः । तत्र तु नृणां स्वेन स्वभावेन कामाच्चोदनयापि वा या नियता वृत्तिर्जीविका कृता, सा वृत्तिरुच्यते इत्यर्थः ।

"रक्षाऽच्युतावतारेहा विश्वस्याऽनुयुगे युगे ।
तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥"
( भा० १२।७।१४ )

यैः—अवतारैः ।

---

वैद्याभूषणी ।

पुरुषः परमात्मा विरिञ्चान्तःस्थ इति बोध्यम् । स्फुटार्थानि शिष्टानि ॥

राधामोहनी ।

गुणः—सत्त्वादिः, क्षोभः—क्रिया, महान्—महत्तत्त्वम्, वासना—संस्कारः,

अनेन—ईशकथा, स्थानम् , पोषणञ्चेति त्रयमुक्तम् ।

"मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः ।

ऋषयोंऽशावताराश्च हरेः षड्विधमुच्यते ॥"

( भा० १२।७।१५ )

मन्वाद्याचरणकथनेन सद्धर्म्म एवाऽत्र विवक्षित इत्यर्थः । ततश्च प्राक्तनग्रन्थेनैकार्थ्यम् ।

"राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः ।

वंशानुचरितं तेषां वृत्तं वंशधराश्च ये ॥"

( भा० १२।७।१६ )

तेषां राज्ञाम्, ये च वंशधरास्तेषां वृत्तं वंशानुचरितम् ॥

"नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः ।

संस्थेति कविभिः प्रोक्ता चतुर्द्धाऽस्य स्वभावतः ॥"

(भा० १२।७।१७)

अस्य—परमेश्वरस्य । स्वभावतः—शक्तितः । आत्यन्तिक इत्यनेन मुक्तिरप्यत्र प्रवेशिता ।

---

वैद्याभूषणी ।

पूर्वोक्तायां दशलक्षण्यां मुक्तिरेकलक्षणम् , अस्यान्तु चतुर्विधायां संस्थायामात्यन्तिकलयशब्दिता मुक्तिरानीतेति । यश्चानुशयिनमिति ।

राधामोहनी ।

तत्प्रधानः—तदधीनः, 'तेन' इत्यस्य स्वभावेन इत्यर्थः । मन्वन्तरं षड्विधमित्यर्थः । त्रैकालिकोऽन्वयः, सन्तानं वंशः, वंशपदेनेह विवक्षितः ॥

"हेतुर्जीवोऽस्य सर्गादेरविद्याकर्म्मकारकः ।
यञ्चानुशायिनं प्राहुरव्याकृतमुताऽपरे ॥" ( भा० १२।७।१८ )

हेतुर्निमित्तम् । अस्य—विश्वस्य । यतोऽयमविद्यया कर्म्म-कारकः । यमेव हेतुं केचिच्च तस्य प्राधान्येनाऽनुशयिनं प्राहुः । अपरे उपाधिप्राधान्येनाऽव्याकृतमिति ।

"व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु ।
मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥"
( भा० १२।७।१९ )

---

वैद्याभूषणी ।

भुक्तशिष्टकर्म्मविशिष्टो जीवोऽनुशयीत्युच्यते । रूपेति । मूर्त्या संज्ञया च उपेतेष्वित्यर्थः । कार्यदृष्टमिति । घटादिभ्यः पृथगपि

राधामोहनी ।

बादरायणेति । तत्समाधिलब्धब्रह्मजीवभेदेन विरोधादित्यर्थः, जाग्रदादिषु जीववृत्तिषु मायामयेषु देहादिषु जीवस्वरूपस्योपाध्युपहितस्योपाधिव्यतिरेकोऽस्ति, तेन शुद्धस्य तस्य विषयावभासकत्वम्, उपाधौ तस्य विलक्षणसम्बन्धरूपान्वयोऽपि जाग्रदादिकालेऽस्ति, तेन तदानीमभिमानितेति । शुद्धजीवोऽपि श्लोकेऽत्र तात्पर्यविषयो भवितुमर्हति, तथापि तस्य ब्रह्मत्वं न घटते, प्रागुक्तसमाधिलब्धार्थविरोधात् सुषुप्ते निरुक्तान्वयासत्त्वाच्च न जीवपरतया व्याख्यायते इति भावः । केवलसद्स्वरूपेण निरुपाध्यंशेन व्यतिरेक इति, तेन ब्रह्मणस्तुरीयत्वं परमसाक्षितया शुद्धजीवस्य साक्षाद्दर्शनशक्त्युद्बोधकतयाऽन्वयश्चेति, "शिवमद्वैतं चतुर्थं मन्यन्ते" ( नृ० पू० ४।२ ) इति श्रुतेः, "तुरीयं त्रिषु सन्ततम्" इति स्मृतेश्च ।

श्रीबादरायणसमाधिलब्धार्थविरोधादत्र जीवशुद्धस्वरूपमेवाश्रयत्वेन न व्याख्यायते। किन्तु अयमेवार्थः—जाग्रदादिष्ववस्थासु, मायामयेषु मायाशक्तिकल्पितेषु महदादिद्रव्येषु च केवलस्वरूपेण व्यतिरेकः परमसाक्षितयाऽन्वयश्च यस्य तद् ब्रह्म जीवानां वृत्तिषु शुद्धस्वरूपतया सोपाधितया च वर्त्तनेषु स्थितिष्वपाश्रयः, सर्वमत्यतिक्रम्याश्रय इत्यर्थः। 'अप' इत्येतत् खलु वर्ज्जने, वर्ज्जनञ्चातिक्रमे पर्य्यवस्यतीति। तदेवमपाश्रयाभिव्यक्तिद्वारभूतं हेतुशब्दव्यपदिष्टस्य जीवस्य स्वरूपमाह—द्वाभ्याम्।

पदार्थेषु यथा द्रव्यं तन्मात्रं रूपनामसु।
बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम्॥
विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम्।
योगेन वा तदात्मानं वेदेहाया निवर्त्तते॥

---

वैद्याभूषणी।

पृथिव्यादेः प्राप्तेरित्यर्थः। अपाश्रयेति। ईश्वरध्यानयोग्यो भवतीति-

राधामोहनी।

"एकादशात् जीवोऽल्पशक्तिरल्पज्ञः" इत्यादिश्रुत्या जीवस्य स्वतः सिद्धज्ञानाभावात्।

"बुद्धेश्चोदयिता यश्च चिदात्मा पुरुषो विराट्"।

इति गायत्र्यर्थविवरणयाज्ञवल्क्यवचनात्। "को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयति जीवान्" इति रामानुजभाष्यधृत-

रूपनात्मकेषु पदार्थेषु घटादिषु यथाद्रव्यं पृथिव्यादियुतमयुतञ्च भवति, कार्यदृष्टिं विनाप्युपलम्भात्, तथा तन्मात्रं शुद्धं जीवचैतन्यमात्रं वस्तु गर्भाधानादिपञ्चतान्तासु नवस्वप्यवस्थासु अविद्यया युतं स्वतस्त्वयुतमिति शुद्धमात्मानमित्थं ज्ञात्वा निर्विण्णः सन्नपाश्रयानुसन्धानयोग्यो भवतीत्याह—विरमेतेति ।

वृत्तित्रयं जाग्रत्स्वप्नसुषुप्तिरूपम् । आत्मानम्—परमात्मनं । स्वयम्—वामदेवादेरिव मायामयत्वानुसन्धानेन, देवहूत्यादेरिवा-

---

वैद्याभूषणी ।

त्यर्थः । स्वयमिति । वामदेवः खलु गर्भस्थ एव परमात्मानं बुबुधे; योगेन देवहूतीत्यर्थः ।

इति कलीति । कलियुगपावनं यत् स्वभजनं तस्य विभजनं वितरणं प्रयोजनं यस्य; तादृशोऽवतारः प्रादुर्भावो यस्य, तस्य श्रीभगवत्कृष्णचैतन्यदेवस्य चरणयोरनुचरौ, विश्वस्मिन् ये वैष्णवराजा-

राधामोहनी ।

श्रुतेश्च, जीवस्य मुक्तादशायां दशात्रयातीतत्त्वेऽपि न तदानीं दशात्रयान्वय इति तद्व्यावृत्तिः । रूपनामात्मकेषु—रूपनामयुक्तेषु । पञ्चता—मरणं, द्रव्यस्य—पृथिव्यादेः घटादावुपादानतया व्यापकस्य योगायोगौ सम्भवतः । जीवस्याणुतयाऽनुपादानतया च कथमेकदा देहायोगायोगौ सम्भवतः ? इत्यत आदौ पूरयति—अविद्ययेति, देहवैशिष्ट्यावच्छेदेनाविद्यया मोहनं, तदुपहिते मोहनाभाव इति पर्यवसितम् । दृष्टान्तस्तु योगायोगांशमात्रे । स्वतस्तु देहादिविशेषेणान्तर्भावेन अयुतमिति । एतेन जीवस्य न स्वाभाविकोऽविद्यासम्बन्धः, येन न तत्त्यागः स्यात्; किन्त्वौपाधिक इति; ज्ञानं वैराग्योपयोगि-तत्तरण-साधनप्रवृत्त्युपयोगीति तद्दर्शितमिति भावः । यदा चित्तं विरमेत वियुक्तं सदात्मनिष्ठं भवति । स्वतो योगेन वा वृत्तित्रयं जाग्रदाद्यवस्थात्रयं हित्वा आत्मानं परमात्मानं वेद पश्यति तत ईहायाः इतरसाधनान्निवर्तते इत्यर्थः । "यदात्मानं विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय संसारमनुसंतरेत्" ( वृ० आ० ४, ४, १२, ) इति श्रुतेः । अयमस्मि देहादिव्यतिरिक्तब्रह्मांशचिद्रूपोऽस्मीति, "भिद्यते हृदयग्रन्थिश्छिद्यन्ते

नुष्ठितेन योगेन वा। ततश्च ईहायास्तदनुशीलनव्यतीरिक्त-चेष्टायाः। १।७ श्रीसूतः। उद्दिष्टः सम्बन्धः।

इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीश्रीभगव-त्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजन-भाजनश्रीरूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे तत्त्वसन्दर्भो नाम प्रथमः सन्दर्भः॥

---

वैद्याभूषणी।

स्तेषां सभासु यत् सभाजनं सत्कारस्तस्य भाजने पात्रे च यौ श्रीरूप-सनातनौ, तयोरनुशासनभारत्य उपदेशवाक्यानि गर्भे मध्ये यस्य तस्मिन्॥ ०॥

टिप्पनी तत्त्वसन्दर्भे विद्याभूषणनिर्मिता।
श्रीजीवपाठसंपृक्ता सद्भिरेषा विशोध्यताम्॥

इति श्रीमद्बलदेवविद्याभूषणविरचिता
तत्त्वसन्दर्भटिप्पनी समाप्ता।

राधामोहनी।

सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।" इति श्रवणाद् "ब्रह्म वेद ब्रह्मैव भवति, निरञ्जनः परमं साम्यमुपैति।" इत्यादिश्रुतेश्च जीवपरयोरेव ज्ञानं श्रेयःसाधनमिति पर्यवसितम्। इत्थञ्च पुराणलक्षणे आश्रयपदं सर्वाधारं सर्व-कारणं सर्वान्तर्यामितुरीयचैतन्यैकरूपब्रह्मकृष्णपरमिति निर्व्यूढम्, "एको वशी सर्वगः कृष्ण ईड्यः" इत्यादिगोपालतापिन्यादिश्रुतेरिति। सम्बन्ध इति—श्रीभागवत–तदभिधेयतत्प्रयोजनानां मिथः सम्बन्ध इत्यर्थः।

इति कलियुगपावनावतार–श्रीमदद्वैतकुलोद्भव–श्रीराधा-मोहनगोस्वामिभट्टाचार्यकृता तत्त्वसन्दर्भ-टिप्पनी सम्पूर्णा।

# अशुद्धि-शोधनम्

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| कालेषु | कलिषु | ३ | ८ |
| क्वचित्शुक | क्वचिच्छ्यामत्वेन क्वचत् | ३ | ६ |
| पारतम्ये | पारतन्त्र्ये | ५ | १५ |
| तिमासीदती | तमासीदी | ६ | १५ |
| भावगती | भागवती | ६ | १६ |
| चीनाङ्गी | चीनानङ्गी | ७ | ६ |
| रीत्यां | रीत्या | ७ | ६ |
| साद्दश | साद्दश्य | १० | ११ |
| तेनापुरुष | तेन पुरुष | १० | १८ |
| श्रमाद्यो | श्रमादयो | १५ | ८ |
| प्रमाण्य | प्रामाण्य | १६ | १३ |
| प्रमाण्य | प्रामाण्य | १६ | १६ |
| भाध्य | साध्य | १६ | २ |
| रिति वेद | रिति । एतेन वेद | २० | २४ |
| अन्यथा वेद | अन्यथाऽवे | २३ | १ |
| रचनान्तरेण | रचनान्तरेणेत्यर्थः । | २७ | ११ |
| न्तगत | न्तर्गत | २७ | १५ |
| ममृमु | ममूमु | २८ | १५ |
| निबन्धाः | निबद्धाः | २८ | २० |
| नाभभे | नामभे | २६ | ११ |
| पौरुषेण | पौरुषेदेण | २६ | १६ |
| तथा रथ | यथा रथ | ३० | ४ |
| दवया | देवया | ३० | १४ |
| दीनाप्य | दीनामप्य | ३० | २३ |
| कृतः | कुतः | ३१ | ६ |
| पातं | पात्रं | ३१ | १२ |
| कृतः | कुतः | ३१ | १७ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्ति |
|---|---|---|---|
| तथाधि | तथानधि | ३२ | १२ |
| र्थग्रन्थत्वे | श्रवणेन | ३४ | १६ |
| सञ्जक | सञ्जनक | ३६ | २० |
| च-"पूर्णः सोऽयमतिशयः। | च पूर्णः सोऽयमतिशयः। | ४८ | १ |
| तात्पय | तात्पर्य | ४८ | १६ |
| त्वतिरि | त्वत्यरि | ४६ | ६ |
| निर्णयो | निर्णयो | ४६ | १८ |
| मगव | भगव | ५१ | १८ |
| मिरू | भिरु | ५४ | २१ |
| देव | दैव | ५५ | ४ |
| सव | सर्वे | ५७ | ८ |
| एवति | एवेति | ५८ | १३ |
| दुक्त | द्युक्त | ६१ | ८ |
| गोद | गोद्दे | ६१ | २२ |
| सारे | सारेण | ६३ | २ |
| द्धेहो | द्धेतो | ६६ | १७ |
| पदेशः | पदेशात् | ६८ | ५ |
| दानां | दीनां | ७० | ७ |
| दशि | दर्शि | ७२ | १८ |
| शङ्करं | शाङ्करं | ७६ | १२ |
| लध्वा | लब्ध्वा | ७६ | १७ |
| गारुणादा | गारुडादी | ७८ | १-२ |
| सर्व | सर्वं न | ७८ | ६ |
| मन्भ | मन्म | ७८ | १७ |
| तया | यता | ७६ | ७ |
| मुखे | स्वसु | ८० | ५ |
| धित्वम् | धिम् | ८६ | १३ |
| मन्तप | मन्तमप | ८७ | ३ |
| निवि | निर्वि | ८६ | ५ |
| कचिदित्यधिकः | इत्यधिकः क्वचित् | ८६ | २० |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| मते | मतं | ६१ | १२ |
| घर | पर | ६६ | २० |
| सव | सर्व | ६८ | ११ |
| विश्वा | र्विश्वा | ६८ | १४ |
| जह | जहा | ६६ | ८ |
| बलि | वलि | १०२ | १ |
| निर्वत | निवर्त | १०३ | १५ |
| धटे | घटे | १०५ | ३ |
| द्यपा | द्युपा | १०७ | ७ |
| जवा | जपा | १०७ | १७ |
| जवा | जपा | १०७ | १८ |
| ताघ | नाघ | १११ | ३ |
| ध्रुव' | ध्रुवः | ११२ | ६ |
| दारा | दारो | ११२ | १६ |
| पत्त्य | पपत्त्य | ११५ | ७ |
| तनम् | तनत्वम् | ११८ | २२ |
| शन | शमन | १२२ | ३ |
| कर | कार | १२६ | ४ |
| मावः | भावः | १३० | ११ |
| स्याऽनि | स्या अ | १३० | २१ |
| कंत्व | क्त्व | १३३ | ६ |
| सुख्य | मुख्य | १३३ | ११ |
| ज्ञाना | ज्ञान | १३३ | १४ |
| यंथा" | :"यथा | १३३ | १७ |
| म्ये | म्यै | १३३ | १७ |
| मृण्म | मृन्म | १३३ | १७ |
| द्द | सत्ता द्द | १३३ | १६ |
| ज्ञानं | ज्ञाने | १३५ | १ |
| तमे | तमं | १३५ | १ |
| वैद्याभूषणी | राधामोहनो | १३५ | ३ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| वैद्याभूषणी | राधामोहनी | १३६ | ९ |
| ज्ञाश्रु | ज्ञातश्रु | १३६ | ९ |
| पान | पादान | १३६ | १० |
| माया | मया | १३६ | १४ |
| मिध | मिद् | १३७ | २० |
| जावे | जीवे | १३८ | ११ |
| वीस्थ | वस्थि | १४३ | ६ |
| ततश्व | ततश्च | १४३ | ९ |
| आभ | अभि | १४७ | |
| दा वृात्त | दौ वृत्ति | १४७ | |
| ए ं च | एवं च | १४७ | |
| त 'जानाम' | त् 'जानामि' | १४७ | |
| तज्जनी | तज्जननी | १४९ | |
| सव | सर्व | १५० | १६ |
| विका | विकी | १५० | १७ |
| एयसा | एयसौ | १५० | १९ |
| प्ता मुक्ता | प्तौ मुक्तौ | १५० | २१ |
| कतृ | कर्तृ | १५६ | २१ |
| भा ं | भावे | १५७ | ७ |
| चतन्य | चैतन्य | १५९ | १५ |
| त्वेनः | त्वेन | १६३ | १९ |

॥ इत्यशुद्धिशोधनम् ॥

विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रं तन्न आसुव ॥